श्रीविश्वेश्वरो विजयतेतराम् ।

---

काशीस्थ—पं० विश्वेश्वरशास्त्रि-प्रकाशि[illegible]
विरोधोपरि
पं० देशिकवरदाचार्यैः प्रकाशितस्य
'विरोध-परिहार' संज्ञस्य पत्रस्य प्रत्युत्तररूपं

# परिहार-खण्डनम् ।

काशीनिवासिना
पं० रुद्रभट्टशर्मणोपनिबद्धम् ।

पं० विश्वेश्वरशास्त्रि-प्रकाशित-
विरोधपत्रिकया
पं० देशिकवरदाचार्य-प्रकाशित-
'विरोध-परिहार' पत्रिकया च
सहितम् ।

-:o:-

*Printed by Jai Krishna Das Gupta,*
*at the Vidya Vilas Press,*
BENARES.

1916.

# परिहार-खण्डनम् ।

श्री १०८ मच्छङ्करभगवत्पादाचार्येभ्यो नमः ।

ईश्वरो गुरुरात्मेति मूर्तिभेदाद्विभागिने ।
व्योमवद्व्याप्तदेहाय दक्षिणामूर्तये नमः ॥ १ ॥
येनाऽद्वन्द्वमखण्डमक्षयपदं प्रादर्शि तापापहं
भाष्यग्रन्थनिबन्धनैः श्रुतिशिरोवाक्यार्थविद्योतिभिः ।
नित्यं यत्र समस्तसद्गुणगणस्तं शङ्करं प्राञ्जलि-
र्विख्यातं मुनिमौलिलालितपदद्वन्द्वं सदा संश्रये॥ २॥

विदाङ्कुर्वन्त्विह सदेकपक्षपातिनः सहृदया विद्वांसः—

रामानुजमते पं॰विश्वेश्वरशास्त्रिप्रकाशितविरोधनिवारकत्वेनाऽऽत्मानं प्रकटयितुं पण्डितदेशिकवरदाचार्याः 'विरोध-परिहार'नामकं किमपि पत्रं प्राकाशयन् । तत्र विरोधपरिहारमकृत्वा निन्दाक्षराणि बहूनि प्रकाशितवन्तः । वस्तुतस्तु पं॰विश्वेश्वरशास्त्रिणा नैकमपि निन्दाक्षरं प्रयुक्तं, न वा काशीस्था विद्वांसः श्रीमतामनन्ताचार्याणां वैभवं दृष्ट्वा असहमाना असूयालवः निन्दाक्षराणि प्रयुञ्जानाः कृतकृत्यान् धन्यांश्चाऽऽत्मनो मन्यन्ते । कियदिदं नाम वैभवं भवद्भिर्लोकोत्तरत्वेनाऽवगम्यमानं श्रीमतामाचार्याणां ? यत्ते नाम न सहेरन् ! भवदीया-

चार्यापेक्षया शतगुणितवैभवातिशयशालिनां वल्लभाद्यनुयायिनां कार्श्यं सत्त्वात्, किन्तु सुरासुरवृन्दसंसेवितचरणारविन्दयुगलस्य भगवतो विश्वेश्वरस्य काशीमागत्याऽपि दर्शनमकृत्वा स्वगोष्ठ्यां तदनादरद्योतकानि वचनानि प्रयुञ्जानान्, भस्मरुद्राक्षधारिणस्तद्भक्तांश्चोपहसतो भवदाचार्यानाकर्ण्य केवलमनु[illegible]पारायणाः खेदं प्रकाशयन्तो बोधयन्ति, यत्—भवत्सिद्धान्तानुसारेण शिवस्य श्रुतिस्मृतिपुराणजेगीयमानमहिमातिशयस्य भवदीयाचार्यापेक्षयोत्तमत्वं विद्यत इत्यत्र नाऽस्ति सन्देहलेशोऽपि, अद्ययावत् वाराणसीं समागता विभिन्नमतानुयायिनोऽप्याचार्या विश्वेश्वरदर्शनं विधायैव निवासं प्रति प्रस्थिताः, आचार्यपदवीमारुरुक्षवः श्रीमदनन्ताचार्यस्वामिनः पूर्वाचार्यसरणिमतिक्रामन्तो विपश्चितां सहृदयानां चेतःसु विस्मयमादधतीति महान् खेद इति । अतोऽत्रत्येषु विद्वद्वरेषु एतादृशासूयादिमत्त्वाद्यारोपः, पं० विश्वेश्वरशास्त्रिणि तदन्यतमत्वारोपश्च महदनौचित्यं भवतामभिव्यनक्ति ।

अस्त्विदं तावत् । यद्यपि विश्वेश्वरशास्त्रिणा विरोधशतं निरूप्यत्वेन प्रतिज्ञाय चत्वार एव विरोधाः प्रकाशितास्तथाऽपि त एव भवतां पाण्डित्यपरीक्षायै पर्याप्ताः, तेषां समाधाने सति अन्येऽपि प्रकाशिता भविष्यन्ति, वस्तुतस्त्वेतेषां परिहार एव दुर्घट इत्युपरिष्टात् प्रतिपादयिष्यते ।

यच्च—शास्त्रिणो मते ब्रह्मव्यतिरिक्तं सर्वं मिथ्येति रामानुजमते प्रदर्श्यमानानां विरोधानां तथाविधत्वेनैव भाव्यमित्युपपाद्य—'युक्तमेवेदं सिद्धान्ताभिमानिनोऽस्येति मन्यामहे वयं—'इत्यनेन परिहसनं, तदपि भङ्ग्यन्तरेण तदुद्भावितानां दोषाणां स्वपक्षे सत्त्वसाधकं भवतीति मन्यामहे । यतः—

"यथार्थं सर्वविज्ञानमिति वेदविदां मतं-"इत्यादिभवदाचार्योपदिष्टभाष्योक्तरीत्या भ्रमस्थले अधिष्ठानशुक्तिकादावारोप्यस्य रजतादेः पारमार्थिकसत्त्वमभ्युपगम्य भ्रान्तिविज्ञानस्य यथार्थत्वं साधयतां भवतां मते भ्रान्तिसमुद्भावितानामपि दोषाणां पारमार्थिकसत्त्वस्याऽवश्याभ्युपगन्तव्यत्वात् ।

यच्चाऽन्यत्-'विरोधवरूथिनी'नामकदुर्ग्रन्थे प्रदर्शिता एव विरोधाभासा अपूर्वत्वेन उद्भाविता इति स्वबुद्धिबलेन नूतनं न किञ्चिच्छास्त्रिणा समुद्भावितमिति तत्परिहारार्थं न प्रयत्नविशेष उपयुज्यते, तद्ग्रन्थप्रदर्शितविरोधाभासानां निराकरणस्य बहुभिर्ग्रन्थैः कृतत्वात्, तथाऽपि शास्त्रिणो योग्यतासर्वस्वं प्रकाशयितुं मृदुलमतीनां व्यामोहं प्रशमयितुं चैष प्रयत्नः-इत्यादि । अत्र ब्रूमः-किं भवन्मते असामञ्जस्यप्रदर्शनेनैव तस्य दुर्ग्रन्थत्वं ? आहोस्वित् अस्त्यन्यत् किञ्चित्कारणं ? यद्याद्यः पक्षस्तर्हि सिद्धान्तान्तरेषु दोषोद्भावनपरत्वदीयग्रन्थस्य कुतो न दुर्ग्रन्थत्वमिति वक्तव्यम । न चाऽन्यत् दुर्ग्रन्थत्वे किञ्चित् कारणं प्रदर्शितमिति निर्हेतुकं दुर्ग्रन्थत्वमापादयता भवता स्वस्य नूनमनितरसाधारणं गुणैकपक्षपातित्वमाविष्कृतमित्यवधारयामः ।

इदं चाऽपरं भवान् प्रष्टव्यः—यत् कथङ्कारमर्वाग्दशा भवता शास्त्रिमहाशयप्रकाशितायां पत्रिकायां स्वबुद्धिबलेनाऽऽविष्कृतत्वस्य बोधकानां पदानामभावेऽपि अनेन शास्त्रिणा स्वबुद्धिबलेनेमे दोषा मया आविष्कृता इति स्वगोष्ठ्यां प्रकाशितमिति निरधारि ? ग्रन्थस्था एव विरोधाः श्रद्धाजडैः सम्भावितानां भवतां स्थालीपुलाकन्यायेन योग्यतापरीक्षायै परं प्रकाशिताः, न तावता तस्य शास्त्रिणः काऽपि न्यूनताऽऽपादयितुं

शक्या। यदि नाम तेन ते विरोधाः स्वमनीषया प्रसूता इति प्रतिपादितमभविष्यत्तर्हि स्थाने खल्वयमनुयोगोऽभविष्यत्, न च तथा तेन प्रत्यपादीति वृथा भवतामयमायासः।

धूलिप्रक्षेपसदृशैर्वचनैः परपक्षे भवद्भिः प्रसज्यमानानां दोषाणामसारतोपपादनाय भवदीयव्यामोहप्रशमनाय चाऽस्माकमपि प्रयत्न इत्यवधेयम्।

प्रकृतमनुसरामः। 'विप्रतिषेधाच्चाऽसमञ्जसम्'इति सूत्रमन्यथा पठितमित्यापाद्य यद्भवतोपहसितं, तदुपहासास्पदमेवेति मन्यामहे। भवदाचार्यैरद्ययावत् प्राचीनपुस्तकेष्वप्यनुपलभ्यमानानि सूत्राणि यथा कानिचित् प्रकाशितानि, कुत्रचित् पाठभेदोऽपि कृतः,(१) तावता च न ते पाठभेदाः सूत्राणि वा न सन्तीति केनचिद्वक्तुं शक्यं, तद्वदेवाऽस्मदीयप्राचीनलिखितपुस्तकेषु 'असमञ्जसम्'इतिस्थाने 'असामञ्जस्यम्'इति पाठमुपलभ्य यदि नाम तथा विलिखितं,तावता–'अन्यादृशं वेदान्तदर्शनज्ञानमस्य व्यक्तीभवति–'इत्युपहासकरणं न प्रेक्षावतो भवतः शोभते। तथा चेत् भवत्सम्प्रदायाचार्याणामप्युपहासः कृतो भवेद्भवद्भिः! अत्र च 'विप्रतिषेधाच्चाऽसमञ्जसम्'इति खलु साङ्ख्याधिकरणान्तर्गतं सूत्रमिति वक्तव्ये यत्–'साङ्ख्याधिकरणसूत्रम्'-इति प्रत्यपादि, तद्भवतोऽसाधारणमधिकरणज्ञानमभिव्यनक्ति! 'रचनानुपपत्तेश्च नाऽनुमानम्'इत्येतत्किलाऽधिकरणसूत्रम्, 'विप्रतिषेधात्–'इत्यादिसूत्रं तु अन्तिमं सूत्रमिति कथमधिकरणसूत्रपदवाच्यं भवेदिति निष्पक्षपाताः सुधिय एव विचारयन्तु।

इदश्चाऽपरमस्य पाण्डित्यं प्रशंसनीयं यदसौ 'विरो-

---

(१) यथा सूत्राणि 'अत एव च स ब्रह्म' 'प्रतिज्ञाविरोधात्'इत्यादीनि।

धवरूथिनी'इति लिखितव्ये थकारस्थाने धकारमसकृल्लिखन् महावैयाकरणत्वमात्मनः प्रख्यापयति !

यश्च-विरोधवरूथिनीस्थमेव प्रतिज्ञाश्लोकं समुद्धरता शास्त्रिणा कवनसामर्थ्यमपि स्त्रीयं स्फुटीकृतमित्याक्षेपः, सोऽपि पूर्वोक्तयैव रीत्या निवारित इति न तत्समाधानाय प्रयत्यते ।

यच्चाऽपरमुद्घोषणं—भाष्यकारैर्भगवत्पादैरपि विधिनिषेधशास्त्रस्याऽद्वैतशास्त्रेण बाध्यत्वमपरैश्च तदनुयायिभिः अपच्छेद्न्यायेन भेदावलम्बिनः पूर्वशास्त्रस्य परेणाऽभेदशास्त्रेण बाध्यत्वं प्रतिपादितमिति तत्सर्वं विस्मृत्याऽनेन शास्त्रिणा स्वसिद्धान्तविरुद्धं 'बाध्यबाधकभावासम्भवात्—'इत्युक्तमित्यादि, तच्छास्त्रिमहाशयप्रदर्शितपङ्क्तिभावानवबोधविजृम्भितमिति मन्यामहे । शास्त्रिणो ह्ययमभिप्रायः—षोडशिग्रहणाग्रहणवत्समानबलशास्त्रद्वयबोधितयोर्विरुद्धयोर्बाध्यबाधकभावो न सम्भवतीति विकल्प आश्रयितव्यः । न ह्येतावता शास्त्रस्य शास्त्रान्तरबाध्यत्वं नाऽस्तीति तेन प्रतिपाद्यते, विरोधे हि बलीयसा दुर्बलं बाध्यत एव, यथा—'मा हिंस्यात्सर्वा भूतानि'—इति सामान्यशास्त्रं विशेषशास्त्रेण 'अग्नीषोमीयं पशुमालभेत'इत्यनेन । अद्वैतशास्त्रेण च विधिनिषेधशास्त्रं बाध्यते, कस्य हेतोः ? द्वयोरपि समानबलत्वाभावात् । अद्वैतशास्त्रं हि षड्विधतात्पर्यनिर्णायकलिङ्गैरवगमिताद्वैततात्पर्यं अनन्यपरत्वेन प्रबलमिति युक्तो भेदसत्त्वतात्पर्यशून्यस्य व्यावहारिकभेदमात्रेण सावकाशस्य दुर्बलस्य तेन बाध्यबाधकभावः । न च तथा षोडशिग्रहणाग्रहणप्रतिपादकयोः शास्त्रयोः प्राबल्यं दौर्बल्यञ्च, अतस्तत्र न बाध्यबाधकभावो भवितुमर्हतीति विकल्पः पर्यवस्यति । एवञ्च साङ्ख्यशास्त्रोक्तानामर्थानां परस्परं

विरुद्धत्वात् तत्प्रतिपादकयोर्द्वयोः शास्त्रयोस्तुल्यबलत्वेन बाध्यबाधकभावासम्भवाद्वस्तुनि विकल्पानुपपत्तेश्च यथा विरोधः पर्यवस्यति, तद्वदेव भवन्मतेऽपि पूर्वापरग्रन्थयोर्विरोधदर्शनात्तुल्यबलत्वेन बाध्यबाधकभावासम्भवाद्विकल्पस्याऽसम्भवाच्च व्याहतार्थकत्वमापादयितुं प्रवर्तमानं शास्त्रिणं वृथाऽऽक्रामन् भवान् स्वस्य मीमांसानभिज्ञत्वं सूचयति। किं भवता षोडशिग्रहणाग्रहणस्थले बाध्यबाधकभाव इष्यते ? तथा सति मीमांसैवाऽऽकुलीकृता स्यात् ! इष्यते चेत्—स्वस्य विस्मरणं परस्मिन् प्रसञ्जयता भवता—

"खलः सर्षपमात्राणि परच्छिद्राणि पश्यति ।
आत्मनो बिल्वमात्राणि पश्यन्नपि न पश्यति—"

इत्याभाणकः स्वस्मिन् समन्वित इति वक्तव्यमापतति ।

यच्चाऽग्रे—शास्त्रिणः 'पत्युरसामञ्जस्यात्'इत्यधिकरणार्थापरिज्ञानमूलकं दोषोद्घाटनं प्रकाशयितुकामेन भवता भगवत्पादभाष्यस्य कश्चनांऽशं समुद्धृत्य तद्भावोपवर्णनं, तत् जले निमज्जतोऽसहायस्य दूर्वावलम्बनमनुकरोति ! अहो भवदीयाधिकरणार्थज्ञानम् ! यच्छ्रुत्वा मन्यामहे—अवश्यमिदानीं सर्वे भवतः शिष्यतां यास्यन्ति । एवंविधज्ञानवता भवता भाष्याक्षराणि स्वसम्प्रदायभाष्यं च नाऽवलोकितामित्येव वक्तव्यं भवति । भवदीयभाष्यकारो हि पत्युरधिकरणस्योपक्रमे स्पष्टाक्षरैर्वेदविरोधात्पाशुपतागमस्याऽप्रामाण्यं ब्रूते । तथा च भाष्यम्—

'कपिलकणादसुगतार्हतमतानामसामञ्जस्याद्वेदबाह्यत्वाच्च निःश्रेयसार्थिभिरनादरणीयत्वमुक्तम् । इदानीं पशुपतिमतस्य वेदविरोधादसामञ्जस्याच्चाऽना-

दरणीयतोच्यते–'

इति। तदेतद्भाष्यमनवलोक्याऽन्यथैवाऽधिकरणार्थं परिकल्प्य परपक्षं दूषयितुं प्रवर्तमानो भवान् स्वहस्तेन पादयोः कुठाराघातं कुर्वन्तमनुकरोति ! येन हि दूषणेन परपक्ष आक्षिप्यते, तेनैव स्वोपजीव्यभाष्यमपि आक्षिप्तं स्यात् ! न च भगवत्पादानामपि एतादृशोऽभिप्रायो यत् प्रकृतिनिमित्तयोर्भिन्नत्वकथनेनैव पाशुपतागमस्याऽप्रामाण्यं, किन्तु वेदविरुद्धत्वादेव, अत एव 'वेदबाह्येश्वरकल्पना तावदनेकप्रकारा–'इत्यादि तदधिकरणोपक्रमभाष्यम् । एतत्पादारम्भेऽपि च मुमुक्ष्वभिलषितं ब्रह्मज्ञानमेव प्रतिपादनीयं, किमिति परविद्वेषकरः परपक्षप्रतिक्षेपः क्रियत इत्याशङ्क्य न परपक्ष इति कृत्वा परपक्षप्रतिक्षेपप्रधानं प्रकरणमारभ्यते, किन्तु प्रथमाध्यायप्रतिपादितसमन्वयस्य प्रतिपक्षभूतत्वात् तानीतराणि दर्शनानि निराक्रियन्ते इति ब्रुवाणो भाष्यकारः स्पष्टमेव वेदविरुद्धत्वमेव द्वितीयपादे निषेध्यत्वेन प्रतिपादितानां मतानां निराकरणीयत्वे कारणमिति स्वाभिप्रायं प्रकाशयति । तदेतदापाततोऽवलोक्य दूषणमभिदधतो भवतः—'न ह्येष स्थाणोरपराधः, यदेनमन्धो न पश्यति–'इत्यादिवाक्यगोचरता स्पष्टमभिव्यज्यते ।

'वेदविरुद्धानां स्मृत्यादीनामप्रामाण्यं हि पूर्वकाण्डे विरोधाधिकरणे समर्थितम्–'इत्युक्तिस्तु तवैव शोभते । यतोऽनयोक्त्या किं वेदविरुद्धत्वेन स्मृतीनामप्रामाण्यसाधने पौनरुक्त्यं वक्तुमध्यवसितोऽसि ? तथा सति 'स्मृत्यनवकाशदोषप्रसङ्ग इति चेन्नाऽन्यस्मृत्यनवकाशदोषप्रसङ्गात्'इत्यादिसूत्रैर्वेदविरुद्धानां स्मृतीनामप्रामाण्यप्रदर्शनाय प्रवृत्तः श्री-

भाष्यकारोऽपि त्वया प्रतिक्षिप्तः स्यादिति—

'श्रुतिविरुद्धा कपिलोपलब्धिर्भ्रान्तिमूलेति न तया यथोक्तो वेदान्तार्थश्चालयितुं शक्यते–'

इति तत्रत्यभाष्याक्षराणि दुष्टानि प्रसज्येरन् । अतः सामान्येन वेदविरुद्धानां स्मृतीनामप्रामाण्ये पूर्वकाण्डे साधितेऽपि विशेषतः कापिलस्मृत्युपदिष्टार्थस्य वेदविरुद्धत्वं विद्यते न वेतिसंशयानपनोदनात्तदपनोदनाय विरोधं स्पष्टं प्रदर्शयितुं प्रवृत्तत्वान्न पौनरुक्त्यमिति वक्तव्यम् ।

'विरोधे त्वनपेक्षं स्यादित्यादिना वेदविरुद्धस्याऽनादरणीयत्वे सिद्धेऽपि पशुपतिमतस्य वेदविरुद्धताख्यापनार्थं पत्युरसामञ्जस्यादिति पुनरारम्भः–'

इति भवदीयभाष्यमपि । तथा सति भगवत्पादैरपि तथैवोपवर्णने कृते किं नामाऽपूर्वं दूषणं भवतोद्भावितमिति न विद्मः ! अतश्च–'स्वमतभाष्यकाराभिप्रायविरुद्धमेव लिखत्ययमित्युपेक्षणीयः–'इति लेखनस्य भवानेव विषय इति स्पष्टं शक्यते वक्तुम् ।

यच्च पुनरभ्युपगमवादेन–'भवतु वेदविरुद्धागमादीनामप्रामाण्यं तत्सूत्रप्रतिपाद्यं, तथाऽपि यावदागमस्य वेदविरुद्धत्वं न सिध्यति, तावत्त्वदुक्तिमात्रेण न किमपि सिद्ध्यति—'इत्याद्युक्त्वा स्वमतस्य वेदाविरुद्धत्वमुद्घोषितं, तदतिमन्दम् । भगवता बादरायणेन द्वितीयपादे 'उत्पत्त्यसम्भवात्–'इत्यादिचतुःसूत्र्या पाञ्चरात्रतन्त्रस्य वेदविरुद्धत्वेनाऽप्रामाण्यस्य प्रतिष्ठापितत्वात्, तदनुयायिना चाऽऽचार्यभगवत्पादेन स्पष्टीकृतत्वादित्यस्य सर्वजनप्रसिद्धत्वात् । यद्यपि श्रीभाष्यकारैः सैषा चतुःसूत्री पाञ्चरात्रमतस्य

प्रामाण्यसाधनपरत्वेनैव योजिता, तथाऽपि प्रामाण्यसाधनं न तदर्थः, तथा सति पादासङ्गतिप्रसङ्गात् । अयं हि द्वितीयः पादः स्वातन्त्र्येण परपक्षाणामनपेक्षत्वसाधनायैव प्रवृत्त इति भवदीयभाष्यकारैरेवाऽभिहितम्(१) । तत्कथमकाण्डे स्वमत-

(१) पादारम्भे–'इदानीं स्वपक्षरक्षणाय परपक्षाः प्रतिक्षिप्यन्ते', 'महद्दीर्घवत्–'इति सूत्रे–'ब्रह्मकारणवादे परोक्तान् दोषान् पूर्वस्मिन् पादे परिहृत्य परपक्षप्रतिक्षेपो ह्यस्मिन् पादे क्रियते, अतः स्वमतदूषणपरिहारकरणेन स्वमतप्रतिष्ठापनं न सूत्रार्थः–'इत्यादिग्रन्थेनेति शेषः। अयं भावः । चतुःसूत्र्या पाञ्चरात्रमतप्रामाण्यसाधनं स्वोक्तिविरुद्धम् । तथा–'विप्रतिषेधाच्चाऽसमञ्जसम्–'इतिसूत्रं सर्वेष्वेवाऽधिकरणेष्वनुवर्तते । परस्परं विप्रतिषेधाद्वेदविप्रतिषेधाच्चाऽसामञ्जस्यकथनं परपक्षाणां तदर्थः । तदनुसारेण 'विप्रतिषेधाच्च–'इत्यन्तिमसूत्रस्याऽपि भगवत्पादोक्तार्थपरत्वमेव न्याय्यं, न तु जीवोत्पत्तिप्रतिषेधपरत्वम् । तथा सति पूर्वापरविरोधप्रसङ्गात् । ननु–'विप्रतिषेधाच्चाऽसमञ्जसम्–'इतिसूत्रानुवृत्त्यैव भवदभिप्रेतार्थस्य लाभे पुनः–'विप्रतिषेधाच्च–'इतिसूत्रकरणमपार्थकं स्यादित्यस्मदुक्तार्थपरत्वमेवेति चेन्न । विप्रतिषेधात्परपक्षाणामनपेक्षत्वं यथा तथैव सिद्धान्तिनोऽपि मते श्रुतीनां परस्परं विप्रतिषेधादप्रामाण्यं, कुत्रचिद्वियत उत्पत्तिः श्रूयते, कुत्रचिन्नेतीत्येवंरूपपरमपूर्वपक्षमापाद्यैकदेशिसिद्धान्तेनोत्पत्तिश्रुतेर्गौणत्वेनाऽविरोधे सम्पादिते पुनः परमपूर्वपक्षिणा प्रतिज्ञाहान्यादिदोषेण गौणत्वशङ्कां निरस्य विप्रतिषेधेनाऽप्रामाण्यं प्रतिष्ठापितं, 'यावद्विकारं तु–'इत्यादिसूत्रेणाऽऽकाशस्योत्पत्तिं प्रतिपाद्य छान्दोग्ये आकाशं वायुं च सृष्ट्वा तत्तेजोऽसृजतेत्येवंरूपार्थपरत्वव्यवस्थापनेन विप्रतिषेधोद्धारपूर्वकं महासिद्धान्तस्य व्यवस्थापनेन पादद्वयेऽपि प्रथमतः पक्षद्वयप्रतिपादनेन परस्परं विप्रतिषेधादप्रामाण्यमाशङ्क्यैकदेशिसिद्धान्तेन विरोधे परिहृते पुनस्तन्निरसनपूर्वकं परमपूर्वपक्षिणा स्वपक्षे स्थापिते परमसिद्धान्तिना स्वपक्षः स्थाप्यते इत्येवमाद्यर्थकत्वमग्रिमपादद्वयस्य–'विप्रतिषेधाच्च–'इत्य-

२

स्थापनं कर्तुं प्रवृत्तः सूत्रकारः ? तत्तु प्रथमाध्याये सङ्गतम् । अत एव तस्य समन्वयाध्याय इति संज्ञा, द्वितीयाध्यायश्चाऽविरोधाध्यायः, तत्र च प्रथमपादे स्वपक्षे स्मृतिन्यायविरोधपरिहारोऽभिहित इति केवलं द्वितीयपादेन परपक्ष एव निषेध्य इति तस्मिन्नेव पादे स्वपक्षस्थापनमसङ्गतमेव। किञ्च—'उत्पत्त्यसम्भवात्', 'न च कर्तुः करणम्—'इतिसूत्रद्वयेन पूर्वपक्षं प्रसाध्य 'विज्ञानादिभावे वा तदप्रतिषेधः', 'विप्रतिषेधाच्च—'इतिसूत्रद्वयेन स्वमतं प्रसाधनीयम् । तत् पूर्वापरसूत्राणामवलोकनेन सूत्रकाराभिप्रायविरुद्धमेव प्रतिभाति । तथा हि—अस्मिन् पादे यावन्त्यधिकरणसूत्राणि वर्तन्ते, तावन्ति नञ्घटितानि दृश्यन्ते, अनेनैव प्रत्यभिज्ञानेनाऽयं पादः परपक्षप्र-

---

न्तिमसूत्रलभ्यमेवेति तदभावे एतादृशार्थकत्वं न लभ्येतेति तत् सूत्रमावश्यकम्, अतः परस्परं विप्रतिषेध एव तस्याऽर्थः, नाऽऽत्मोत्पत्तिप्रतिषेध इति सिद्धान्तः । आचार्यभगवत्पादेन च 'महद्दीर्घवत्—'इतिसूत्रं स्वमतस्थापनार्थत्वेन योजितमिवेति प्रतिभाति, तथाऽपि न तदर्थकत्वं तस्य सूत्रस्य, किन्तु एकत्र कारणगुणानां कार्ये समानजातीयगुणान्तरारम्भकत्वं प्रदर्श्य द्व्यणुकत्र्यणुकयोस्तद्विरुद्धत्वकथनेन परस्परं विप्रतिषेधाद्वेदविप्रतिषेधाच्च वैशेषिकमतस्याऽसामञ्जस्यकथनमेव तत्सूत्रार्थः, स्वमते दूषणपरिहारस्त्वार्थिक इत्याभिप्रायेणैव स्वमते वैशेषिकोद्भावितं दूषणं पराक्रियत इति भगवत्पादोक्तिः । अत एव-'न विलक्षणत्वात्—'इत्यादिपूर्वपादीयसूत्रोक्तार्थकथनेन न पौनरुक्त्यं, स्वमतप्रतिष्ठापनस्य सूत्रार्थत्वाभावात्, परमतेऽसामञ्जस्यप्रतिपादनमात्रार्थपरत्वात्तस्य । एतेन—'यत्तु परैर्ब्रह्मकारणवाददूषणपरिहारपरमिदं सूत्रं व्याख्यातं, तदसङ्गतं पुनरुक्तं च—'इत्यादिना दूषणप्रदर्शनमपास्तमित्येव वेदितव्यम् । 'उभयथाऽपि न कर्माऽतः—'इत्यादिना तु स्वातन्त्र्येण परमाणुकारणवादो निराक्रियत इति न पूर्वापरविरोधशङ्कालेशोऽपीति सुधीभिरेव विभावनीयम् ।

तिषेधप्रधान इति निश्चीयते । पूर्वपादान्ते हि—'सर्वधर्मोप-पत्तेश्च—'इति सूत्रेण कारणत्वोपयोगिनः सर्वे धर्मा ब्रह्म-ण्युपपद्यन्ते इति स्वमतस्याऽविचाल्यत्वं प्रदर्श्य तदव्य-वहितोत्तरमेव—'रचनानुपपत्तेश्च नाऽनुमानम्—'इत्यनेन सूत्रे-णाऽनुपपत्त्या साङ्ख्यमतस्याऽप्रामाण्यं प्रसाध्यते । अस्मिन्ने-व् च सूत्रे नञ्पदं वर्तते । 'विप्रतिषेधाच्चाऽसमञ्जसम्—'इति सूत्रेण विप्रतिषेधादसामञ्जस्यं प्रदर्श्य तदधिकरणं समापितम् । तद्वदेव—'महद्दीर्घवत्—'इति सूत्रमपि 'असमञ्जसम'इत्यनुवृत्त्या नञ्घटितमेव । 'उभयथाऽपि न कर्माऽतस्तदभावः—'इत्य-स्मिन्नपि सूत्रे नञ्पदं वर्तते । अत इदमधिकरणसूत्रम् । अनन्तरं—'समुदाय उभयहेतुकेऽपि तदप्राप्तिः—'इतीदमपि सूत्रं नञ्घटितम् । तथा—'नाऽभाव उपलब्धेः—'इत्यस्मिन्नपि सूत्रे नञ्पदं वर्तते । तद्वदेव—'नैकस्मिन्नसम्भवात्', 'पत्युरसामञ्ज-स्यात्—'इतिसूत्रद्वये नञ्पदं विद्यत इति कृत्वा इदमधिक-रणसूत्रमिति ज्ञातुं शक्यम् । 'उत्पत्त्यसम्भवात्—'इति सूत्रमपि तद्वन्नञ्घटितमत इदं कथं पूर्वपक्षसूत्रं भवेत ? 'विज्ञानादि-भावे वा—'इतिसूत्रे नञ्पदाभावेन तदधिकरणसूत्रं न भ-वितुमर्हति । अतः पारिशेष्यादस्यैव सिद्धान्तसूत्रत्वं वाच्यम्। तथा च सति स्वमतप्रतिष्ठापनार्थत्वेन सूत्रव्याख्यानं न शो-भत इति पाञ्चरात्रमतस्याऽप्रामाण्यसाधनार्थमेवैषा चतुःसूत्री प्रवृत्ता । शैवागमवत् वैष्णवागमोऽपि वेदविरुद्धत्वाद्धेय इति त-त्तात्पर्यम् । वेदविरुद्धत्वांशस्य विवरणं तु भगवत्पादै-रेव कृतमिति नेह तन्निरूपणाय प्रयत्यते । अत्र बहु वक्तव्यमपि विस्तरभीतेर्नोच्यत इत्यवधेयम् ।

अनेनैव निरूपणेन भवत्सम्प्रदाये वेदतुल्यप्रमाणत्वेना-

ऽभ्युपगतद्राविडभाषामयप्रबन्धस्य वेदविरुद्धत्वेनाऽप्रामाण्यं सूपपादितं भवति, तथा च—'वेदविरुद्धत्वादप्रामाण्यमुत भाषामयत्वात्–'इत्यादिविकल्पानामनवसरदुःस्थत्वमेव ।

अभ्युपगम्याऽपि ब्रूमः । भवतु तावद्‌द्राविडभाषामयप्रबन्धस्य वेदाविरुद्धत्वम्, न तावता तस्य वेदतुल्यं प्रामाण्यं साधयितुं शक्यम्, तस्याऽबाधितासन्दिग्धानधिगतविषयकज्ञानजनकत्वाभावात्, स्वोत्प्रेक्षामूलकत्वेन कल्पितानां तदर्थानामज्ञातत्वस्याऽबाधितत्वस्य चाऽसम्भवात्, सम्भवेऽपि वा 'न म्लेच्छितवै', 'नापभाषितवै', 'म्लेच्छो ह वा एष यदपशब्दः'-इत्यादिभिर्निषेधैर्यदुच्चारणस्य पापजनकत्वमुक्तं, तस्य वेदतुल्यं प्रामाण्यं समर्थयमानो भवान् नूनं स्वस्याऽवैदिकत्वमाविष्करोति ।

एतावता च लेखकमहाशयस्य मुख्यं विषयं परित्यज्य क्षुद्राण्येवाऽवान्तरवचनान्यवलम्ब्य तदीयाभिरेव युक्तिभिर्विवरणपूर्वकं योग्यताविशेषपरीक्षणं कृतम् । इतःपरं विरोधपरिहारार्थं प्रदर्शितां वाग्मितामवलम्ब्य तदसारतोपपादनाय प्रयत्यते ।

तत्र तावत्–विरोधमुद्भावयता शास्त्रिणा श्रीभाष्यानन्तर्गतमपि श्लोकद्वयं श्रीभाष्यगतत्वेनोदाहरता स्पष्टं श्रीभाष्यादर्शित्वं स्वस्याऽऽवेदितमित्याक्षेपः, तत्रोत्तरं तदीया पङ्क्तिरेव । सा चेत्थम्—'प्रथमस्तावत् कारणत्वस्य निरपेक्षाम्नायैकसमधिगम्यत्वं श्रुतिप्रतिषेध्यत्वं चेति तदीयभाष्यमात्रोदाहरणाभ्यामाक्षिप्यते, तथा हि—'शास्त्रयोनित्वात्–' इत्यत्र रामानुजीयं भाष्यम्—'इति । अत्र हि किञ्चिद्भाष्यो-

दाहरणं, किञ्चिद्विस्तृतस्थलीयभावोदाहरणं च शास्त्रिणोऽभिप्रेतम्, तदनुसारेणैव-'रामानुजीयं भाष्यम्-'इत्यत्राऽपि भाष्यभावार्थ इत्येवाऽर्थः समभिप्रेतः, तमेव भावार्थं स विरोधवरूथिनीस्थेन श्लोकद्वयेनोल्लिखन् विरोधं प्रतिपादयितुं प्रवृत्ते इति नाऽत्र किञ्चिद्यौक्तिकं दूषणं पश्यामः ।

यच्च-'यदपि-'शास्त्रयोनित्वाधिकरणार्थकथनं,तदपि श्रीभाष्यानवलोकनमूलकम्-'इत्याद्युक्तम् । तत्रोच्यते । श्रीभाष्यमेव तावत् प्रथमतोऽवलोकयतु भवान्, किं तेन भाष्येण जगत्कारणत्वेन ब्रह्मणो वेदान्तवेद्यत्वसमर्थनं क्रियते ? उत जगत्कारणत्वांशं परित्यज्य वेदान्तवेद्यत्वं समर्थ्यते ? यदि जगत्कारणत्वांशः परित्यज्यते तर्हि तद्भाष्यमसङ्गतं स्यात् । तत्र हि इदमुक्तं—

'तद्धि न वाक्यप्रतिपाद्यं, अनुमानेन सिद्धेः-'इति ।

इत्यनुमानेन कीदृशी सिद्धिः समर्थिता स्यात् पूर्वपक्षिणा ? कार्येण हि कारणमेवाऽनुमितं भवति, यदि जगत्कारणत्वं ब्रह्मणः सिद्धमेव, केवलं वेदान्तैकवेद्यत्वमेव साध्यते इत्युच्यते-कथं तर्हि अग्रे भाष्यकारेणाऽनुमानेन कारणत्वेन ब्रह्म प्रसाध्य तत्खण्डनं कृत्वा 'यतो वा इमानि भूतानि जायन्ते-'इत्यादिवाक्यमुक्तलक्षणं ब्रह्म प्रतिपादयतीत्युपसंहारः कृतः सङ्गतः स्यात् ? 'यतो वा-'इत्यादि वाक्येन हि ब्रह्म कारणत्वेनैव बोध्यते, स्वरूपतस्तु 'सत्यं ज्ञानम्-'इत्यादिवाक्यैः प्रतिपाद्यते, अतः कारणत्वं वेदान्तैकगम्यं न भवतीत्युद्घोषिते भाष्यविरोधः कथं परिहृतः स्यात् ?

किञ्च-प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधादित्यधिकरणे—

'एवं निरीश्वरसाङ्ख्ये निरस्ते सति सेश्वरसाङ्ख्यः प्रत्यवतिष्ठते-यद्यपीक्षणादिगुणयोगात्सर्वज्ञमीश्वरं जगत्कारणत्वेन वेदान्ताः प्रतिपादयन्ति, तथाऽपि वेदान्तैरेव जगदुपादानतया प्रधानमेव प्रतिपाद्यत इति प्रतीयते-'

इति पूर्वपक्षमारचयन् श्रीभाष्यकारः स्पष्टं जगत्कारणत्वं वेदान्तैकसमधिगम्यं, नाऽनुमानसमधिगम्यमित्येव शास्त्रयोनित्वाधिकरणस्य तात्पर्यमित्याभिप्रैति । अनुमानेनैव जगत्कारणं ब्रह्म सिद्ध्यतीति साधयतः पूर्वपक्षिणश्च वेदान्तवाक्यविचारस्य वैयर्थ्यप्रसञ्जनमेवाऽभिप्रेतं, तत्परिहाराय च नाऽनुमानादिना जगत्कारणं निर्णेतुं शक्यम्, अनुमानस्य पुरुषोत्प्रेक्षामात्रमूलकत्वेनाऽप्रतिष्ठितत्वादचिन्त्यजगत्कारणसाधकत्वानुपपत्तेर्वेदान्ता एव निरपेक्षा जगत्कारणत्वेन ब्रह्म बोधयितुं शक्नुवन्तीत्यभिप्रायेण 'यतो वा इमानि-'इत्यादिवाक्यं समुदाहृतम् । युक्तश्चाऽयमर्थः । 'जन्माद्यस्य-'इति सूत्रेण जगज्जन्मादिकारणत्वं ब्रह्मणो लक्षणमुपवर्णितमाकर्ण्य तस्याऽनुमानविधया ब्रह्मणि प्रमाणमुपन्यस्यतीति शङ्कायां तत्परिहारेण वेदान्तैकप्रमाणकत्वसमर्थनार्थं-'शास्त्रयोनित्वात्-'इतिसूत्रकथनम् । एतत्सर्वमनालोच्य स्वीयभाष्यविरुद्धतात्पर्यमुपवर्ण्य परशिरसि दोषप्रहारः स्वनासिकाच्छेदनेन परस्याऽशकुनमुत्पादयिष्यामीति न्यायमनुकरोति ।

आस्तां तावत् । विरोधपरिहारः कीदृशः ? एतदेव विचारयामः ।

तत्र यत्तावदुक्तं-शास्त्रयोनित्वाधिकरणार्थविरुद्धमात्मा-

धिकरणे भाष्यकारैः किमपि न प्रतिपादितं, प्रत्युत जगत्कारणत्वोपपादनमेव क्रियमाणं दृश्यते, इत्थं हि तत्र भाष्यम्—

'अतः सर्वदा चिदचिद्वस्तुशरीरतया तत्प्रकारं ब्रह्म, तत् कदाचित्स्वस्माद्विभक्तव्यपदेशानर्हातिसूक्ष्मदशापन्नचिदचिद्वस्तुशरीरं तिष्ठति, तत् कारणावस्थं ब्रह्म, कदाचिच्च विभक्तनामरूपस्थूलचिदचिद्वस्तुशरीरं, तच्च कार्यावस्थं, तत्र कारणावस्थस्य कार्यावस्थापत्तौ अचिदंशस्य कारणावस्थायां शब्दादिविहीनस्य भोग्यत्वाय शब्दादिमत्तया स्वरूपान्यथाभावरूपविकारो भवति, चिदंशस्य कर्मफलविशेषभोक्तृत्वाय तदनुरूपज्ञानविकासरूपविकारो भवति, उभयप्रकारविशिष्टे नियन्त्रंशे तदवस्थतदुभयविशिष्टतारूपविकारो भवति, कारणावस्थाया अवस्थान्तरापत्तिरूपविकारः प्रकारद्वये प्रकारिणि च समानः—'

इत्याद्युल्लिख्य प्रकारद्वये प्रकारिणि च विकारसद्भावस्य कथनात्कारणत्वं सूपपादम्, कारणत्वप्रयोजकस्य विकारित्वस्य सत्त्वात्, स्वरूपान्यथात्वज्ञानसङ्कोचविकासरूपोभयविधानिष्टविकारा एव ब्रह्मणि न सन्ति, तावता च न कारणत्वहानिरित्यादि ।

तत्रोत्तरम् । अनेन हि भाष्येण ब्रह्मण एवाऽवस्थाभेदेन कार्यत्वं कारणत्वं च प्रदर्शितम् । एवं सति कथं तस्य नित्यत्वं ? इति विचारणीयम् । विभक्तनामरूपस्थूलचिदचिद्वस्तुविशिष्टत्वे स्वरूपान्यथाभावः कथं नोक्तः स्यात् ? यादृशं हि स्वरूपं कारणाव-

स्थायां विद्यते, तादृशमेव चेत्कार्यावस्थायामपि, तर्हि कार्यकारणावस्थयोर्विशेषो न स्यात्, विशेषाभ्युपगमे चाऽऽगन्तुकविशेषरूपेण तस्यैव ब्रह्मणः परिणामात्कौटस्थ्यं कथं संरक्षितं स्यात् ? इति सुधिय एव निरूपयन्तु । यद्युच्येत स्वरूपे न कश्चन विकार उत्पद्यते, केवलं स्थूलचिदचिद्वस्तुवैशिष्ट्यमात्रमेव तत्र भवति, अतो न कूटस्थत्वक्षतिरिति, तदपि नोपपद्यते । यद्धि विकारिवैशिष्ट्यं कार्यावस्थस्य ब्रह्मणः, तत् नित्यं ? उताऽऽगन्तुकं ? यदि नित्यं, कथं तर्हि तस्य कार्यत्वं ? कथं वा तेन ब्रह्मणोऽपि कार्यत्वव्यवहारः ? यद्यागन्तुकं ? तर्हि आगन्तुकविकारिवैशिष्ट्यस्य ब्रह्मण्युत्पन्नत्वेनाऽनित्यत्वापत्तिरपरिहार्यैव प्रसज्येत । 'उपयन्नपयन् धर्मो विकरोति हि धर्मिणम्–'इति न्यायेन यस्य कस्य चिदपि धर्मस्योत्पत्तौ विनाशे वा स्वीक्रियमाणे स्वरूपमनुपमृद्य तदवस्थत्वं नैव वक्तुं शक्यम् । भवद्भाष्यकारश्च स्पष्टमेव प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधादित्यधिकरणे–

'परिणामात्'इति सूत्रेणाऽव्ययक्रमेण जगच्छरीरतयाऽऽत्मानं परिणमयतीति सर्वेषु वेदान्तेषु परिणामोपदेशः–', तथाऽग्रे–'स्वशरीरभूतप्रकृतिपुरुषसष्टिपरम्परया महाभूतपर्यन्तमात्मानं तच्छरीरकं परिणमय्य तन्मयो देवादिस्थावरान्तजगद्रूपो भवति–'

इत्यनेन ब्रह्मणः परिणामित्वं प्रतिपादयति, परिणामि च नित्यं चेति चित्रम् । यतः परिणामो नाम तत्सम‍सत्ताकोऽन्यथाभावः, स यादृशस्तादृशो वा भवतु, सर्वथा हि स्वरूपान्यथाभाव एव पर्यवस्यति ।

किं च विकारिवैशिष्टयस्य ब्रह्मणोऽभिन्नत्वे ब्रह्म न स्वरूपान्यथाभावं भजत इति व्याहतम् । प्रकारे वर्तमानस्य विकारस्याऽनित्यत्वाविनाभाविनोऽभ्युपगमेन तदभिन्नत्वे ब्रह्मणोऽनित्यत्वं न भवतीति कथनं कथं युक्तिसङ्गतं स्यात् ? यदि विकारिवैशिष्ट्यं ब्रह्मणो भिन्नं, तर्हि कथं तेन ब्रह्मणो विकारित्वम् ? यदि च भिन्नत्वेऽपि तेन सह सम्बन्धसत्त्वादनित्यत्वापादकविकारित्वं नाऽस्ति, किन्तु कार्यत्वोपयोगि विकारित्वमात्रमेवेत्युच्यते, तथाऽपि स सम्बन्धो जन्यो वा नित्यो वा ? जन्यत्वे पूर्वावस्थाया विनाशेन तद्द्वारा स्वरूपान्यथात्वप्रसङ्गेन पुनरनित्यत्वापत्तिस्तदवस्था । यदि द्वितीयः पक्ष आश्रीयते, सोऽनुपपन्नः, अनित्यैः समं सम्बन्धस्य नित्यत्वासम्भवात् । सम्भवे वा सम्बन्धिनः प्रकारस्याऽपि नित्यत्वापत्तिः स्यात्, एवम्भूतसम्बन्धवत्त्वस्य सर्वदैव ब्रह्मणि सत्त्वेन कार्यकारणावस्थयोर्वैलक्षण्यस्य दुरुपपादत्वप्रसङ्गात् । नन्वयमेव विशेषः-कारणावस्थायां स्वस्माद्विभक्तव्यपदेशानर्हातिसूक्ष्मदशापन्नचिदचिद्वस्तुसम्बद्धत्वं, कार्यावस्थायां तु विभक्तनामरूपस्थूलचिदचिद्वस्तुसम्बद्धत्वं, तथा च ब्रह्मणि नित्यत्वमेवं तदविरुद्धं कार्यत्वं कारणत्वं च समर्थितं भवतीति चेन्न । चिदाचिद्वस्तुनोः प्रकारभूतयोः स्थौल्यं सौक्ष्म्यं च, विभक्तत्वं अविभक्तत्वं च स्वरूपान्यथाभावरूपमित्यवश्यमभ्युपगन्तव्यम् । अभ्युपगतं च भवता—

'अचिदंशस्य कारणावस्थायां शब्दादिविहीनस्य भोग्यत्वाय शब्दादिमत्तया स्वरूपान्यथाभावरूपविकारो भवति-'

इत्यादिना । चिदंशस्याऽपि धर्मान्यथात्वं स्वरूपान्यथा-

त्वे पर्यवस्यतीत्युपरिष्टादुपपादयिष्यते । एवं च सति अन्यथाभावमापद्यमानेन प्रकारेण सह यः सम्बन्धः, सोऽप्यन्यथाभावं न प्राप्नोतीति न वक्तुं शक्यं, सम्बन्धी अन्यथा भवति, न च सम्बन्धस्तथेत्यस्य व्याहतत्वात् । तथा च तादृशसम्बन्धवत्त्वं च ब्रह्मण्यपूर्वमुत्पद्यत इत्यवश्यं स्वीकरणीयम् । स्वीकारे ब्रह्मणोऽपि दुष्परिहरः स्वरूपान्यथाभावः । प्रतिक्षणमन्यथाभावं भजमानस्य सम्बन्धस्य विकारस्य वा ब्रह्मणि स्वीकारेऽपि ब्रह्मणः स्वस्वरूपं तदवस्थमेव, सम्बन्धरूपधर्ममात्रस्यैवाऽन्यथाभावो भवतीत्युक्तौ च प्रकारस्याऽपि तद्वदेव शब्दादिरूपधर्माणामेवाऽन्यथात्वं भवति, प्रकारस्य तु स्वरूपं तदवस्थमेवेति तस्य ब्रह्मवन्नित्यत्वं केन वारयितुं शक्यं ? यथा हि मृद्द्रव्यस्य घटशरावादिनानाधर्मैर्विक्रियमाणस्य सर्वावस्थायां मृत्स्वरूपप्रत्यभिज्ञाने सत्यपि तस्य नित्यत्वं नाऽभ्युपगम्यते, तद्वत् प्रकारस्याऽप्यन्यथाऽन्यथा विक्रियमाणस्य नित्यत्वं नाऽभ्युपगन्तुं शक्यम् । अभ्युपगम्यमाने सर्वमेव नित्यमिति किं कस्मादुत्पद्यते विनश्यति वेति सर्ववेदान्तप्रतिपादितजगज्जन्मादिकारणत्वस्य ब्रह्मणि व्याकोपप्रसङ्गात् । वस्तुतो धर्मान्यथात्वेऽपि धर्मिणोऽन्यथात्वं न भवतीति कथनं सर्वलौकिकतान्त्रिकसम्प्रदायविरुद्धम् । मीमांसकसाङ्ख्ययोगादयः सर्वेऽपि हि स्वरूपान्यथात्वं धर्मान्यथात्वं च भिन्नतया नाऽभिप्रयन्ति । घटादेः स्वरूपं हि मृद्द्रव्यं, तस्यैव घटशरावादिकं धर्मशब्देन व्यवहृत्य घटादीनामपि ये धर्मा नवत्वपुराणत्वादयस्तेऽपि धर्मशब्देनैव व्यवहृताः । 'एतेन भूतेन्द्रियेषु धर्मलक्षणावस्थापरिणामा व्याख्याताः–'इतिसूत्रव्याख्यानावसरे भगवद्भिर्भाष्यकारैर्व्यासदेवैर्धर्मिणो मृदादे-

घटरूपेण धर्मपरिणामः, धर्मपरिणामस्यैव पुनर्लक्षणपरिणामोऽवस्थापरिणामश्चेति परिणामभेदान् प्रदर्श्य 'परमार्थतस्त्वेक एव परिणामः, धर्मिविक्रियैवैषा धर्मद्वारा प्रपञ्च्यते-'इत्यादिना धर्मान्यथात्वस्वरूपान्यथात्वयोरविशेषं प्रदर्शयद्भिः स्वरूपान्यथाभावमन्तरा विकारस्याऽसम्भवित्वं स्पष्टीकृतमिति प्रकारस्य धर्मान्यथात्वमेव भवति, न स्वरूपान्यथात्वमिति कथनमत्यन्तमसङ्गतम्। तथा च प्रकारस्य स्वरूपान्यथात्वे तत्सम्बन्धस्याऽपि स्वरूपान्यथात्वेन ब्रह्मणोऽपि स्वरूपान्यथात्वं दुष्परिहरमेव। यदि च नैयायिकमतमाश्रित्य धर्मधर्मिणोर्भेदाङ्गीकारेण धर्माणामन्यथात्वेऽपि धर्मिणो नाऽन्यथात्वमिति प्रकारिणि प्रतिक्षणमन्यथाभवतश्चिदचिद्वैशिष्ट्यस्य सत्त्वाभ्युपगमेऽपि न कूटस्थताहानिरित्युच्येत, तथा सति तुल्यन्यायेनाऽचिदंशस्याऽपि धर्मान्यथात्वेनैव कूटस्थत्वापत्तिरपरिहार्या प्रसज्येत। तत्राऽपीष्टापत्तौ ब्रह्मव्यतिरिक्तस्य तस्यैव नित्यत्वेन ब्रह्मणि ज्ञातेऽपि तज्ज्ञातत्वासम्भवेनैकविज्ञानेन सर्वविज्ञानप्रतिज्ञाव्याकोपप्रसङ्गः(१)।

---

(१) अत्रेदमपि विचारमर्हति। सूक्ष्मचिदचिद्विशिष्टं ब्रह्म स्थूलचिदचिद्विशिष्टब्रह्मोपादानमिति पक्षे भिन्नयोरेवोपादानोपादेयभावाङ्गीकारेण ब्रह्मणश्चिदचिद्वर्गाभ्यामभेदाभावात्तयोर्ब्रह्मोपादेयत्वं न स्यादिति ब्रह्मणि ज्ञातेऽपि तयोर्ज्ञातत्वानुपपत्त्यैकविज्ञानेन सर्वविज्ञानप्रतिज्ञाया बाधप्रसङ्गः। एवं विशिष्टस्य विशिष्टरूपजगदन्तर्यामित्वमपि न स्यात्, ब्रह्मणो ब्रह्मान्तर्यामिकत्वासम्भवात्, केवलप्रपञ्चस्य विशेष्यमात्रान्तर्यामिकत्वेऽपि विशिष्टान्तर्यामिकत्वाभावात्। तथा च-'कृत्स्नस्य जगतो ब्रह्मकार्यतया तदन्तर्यामिकतया च तदात्मगतत्वेनैक्यात्तत्प्रत्यनीकनानात्वं निषिध्यते-' इति महासिद्धान्तस्थस्य भाष्यस्याऽसाङ्गत्यप्रसङ्गः। एवं-'सन्मू-

लाः सोम्येमाः प्रजाः सदायतनाः सत्प्रतिष्ठाः—'इत्युपादानोपादेयत्वप्रतिपादकवाक्यविरोधश्च । यदि 'सन्मूलाः सत्प्रतिष्ठाः–' इत्यत्र 'प्रजा'शब्दस्य ब्रह्मपर्यन्तत्वं सच्छब्दस्याऽपि विशिष्टब्रह्मपरत्वं, 'सदायतनाः'इति शरीरात्मभावप्रतिपादकांशे तु प्रजाशब्दस्य विशेषणमात्रपरत्वं सच्छब्दस्य विशेष्यमात्रपरत्वमुच्यते, तथा सति सकृत्प्रयुक्तस्य प्रजाशब्दस्य वैरूप्यं सच्छब्दानां च वैरूप्यं प्रसज्येत । एवं—'प्राज्ञेनाऽऽत्मना सम्परिष्वक्तः–'इतिवाक्ये प्राज्ञशब्दिते भिन्ने परमात्मनि जीवस्य परिष्वङ्गरूपलयश्रवणमप्युपरुध्येत । विशेषणस्य ब्रह्मोपादानकत्वाभावेन तत्र लयासम्भवात् । न च परिष्वङ्गो न लयः, किन्त्वन्य एव संसर्गविशेष इति वाच्यम् । 'स्वाप्ययात्'इतिसूत्रभाष्यव्याख्यानपर्यालोचनायां तयोः समानार्थकत्वस्योपलभ्यमानत्वात् , इतरथा–'सता सोम्य सदा सम्पन्नो भवति–', 'प्राज्ञेनाऽऽत्मना–'इत्यादेर्जाग्रदाद्यवस्थागतकालुष्ययुक्तजीवविशिष्टपरमात्मनस्तद्रहितजीवविशिष्टपरमात्मरूपेणावस्थानार्थकत्वेऽस्य वाक्यद्वयस्य जीवपरभेदाबोधकत्वेन 'सुषुप्त्युत्क्रान्त्योर्भेदेन–'इतिसूत्रासङ्गतिप्रसङ्गात् । यदि च विशेषणीभूतस्य प्रपञ्चस्याऽपि ब्रह्मोपादेयत्वमस्त्येव, भाविस्थूलावस्थावतः पूर्वभाविसूक्ष्मावस्थायोगि ह्युपादानं, अवस्थावत्त्वं च त्रयाणामपि चिदचिदीश्वराणामद्वारकं सद्वारकं च वर्तत एवेति न काचिदप्यनुपपत्तिरित्युच्यते, तथा सति भाविमहत्त्वाहङ्कारत्वाद्यवस्थावत्परमात्मानं प्रति अव्यक्तत्वलक्षणपूर्वावस्थाश्रयस्याऽचेतनस्याऽप्युपादानत्वप्रसङ्गः, एतदर्थं भाव्यवस्थावतस्तदभिन्नं पूर्वावस्थायोग्युपादानमित्युक्तं चेत्तर्हि विशेषणस्य ब्रह्मोपादानकत्वं न स्यात् । किञ्चाऽव्यक्तत्वमहत्त्वाद्यवस्थाया अव्यक्तमहदादिनिष्ठत्वेऽपि ब्रह्मनिष्ठत्वाभावेन ब्रह्मणः पूर्वावस्थायोगित्वाभावात् कथमुपादानत्वं ? यदि च प्रकृत्यादीनां ब्रह्मस्वरूपान्तर्गतत्वेन तदीयावस्थाश्रयत्वं ब्रह्मण इष्यते, तर्हि ब्रह्मणो नित्यत्वं न कथमप्युपपादयितुं शक्यमित्युभयतःपाशा रज्जुः ! चिदचिद्वर्गस्य शरीरतया शरीरगतावस्थानां शरीरिनिष्ठत्वकथनं तु सर्वलौकिकतान्त्रिकविरुद्धं, 'न तु दृष्टान्तभावात्–'इतिसूत्रभाष्यविरुद्धं च ।

एतावानत्राऽर्थसङ्क्षेपः । पूर्वं ब्रह्मणः कारणत्वं प्रदर्श्याऽऽरम्भाधिकरणे कारणत्वोपयोगिविकारित्वाभावेन कूटस्थतया विवर्तवाद इव तदविरुद्धं कारणत्वं न सम्भवतीत्यर्थादापद्यत इति शास्त्रिमहाशयोद्भावितविरोधशङ्कायाः समाधानं विकारिवैशिष्ट्यरूपविकारित्वकथनेन कारणत्वोपपादनद्वारा कृतम् । परन्तु शास्त्रिमहाशयप्रदर्शितविरोधबीजमद्याऽपि न प्रतिक्षिप्तमित्येव वक्तव्यमापतति । तथा हि–ब्रह्मणः कूटस्थत्वमभ्युपगम्यते न वा ? आद्ये विकारिवैशिष्ट्यकृतं विकारित्वं कथं कूटस्थताया न व्याघातकम् ? कूटस्थत्वाविघातकं तु विवर्तकारणत्वमेव भवति, न च विवर्तवादो भवताऽऽश्रीयते । द्वितीये चिदचितोर्विकारित्वेनाऽनित्यत्ववद्ब्रह्मणोऽप्यनित्यत्वं न वारयितुं शक्यम् । अचिदंशस्य स्वरूपान्यथात्वं चिदंशस्य धर्मान्यथात्वं तदुभयवैशिष्ट्यरूपान्यथात्वं ब्रह्मण इतिकथनमात्रेण कूटस्थत्वं न संरक्षितं भवति । वैशिष्ट्यरूपविकारस्याऽपि ब्रह्मधर्मत्वेन तस्य कारणावस्थायां कार्यावस्थायां च विलक्षणत्वेन धर्मान्यथात्वरूपविकारित्वस्याऽपीश्वरेऽविशिष्टत्वात्, धर्मान्यथात्वं च स्वरूपान्यथात्वमन्तरा न सम्भवतीति तत् स्वरूपान्यथात्व एव पर्यवस्यतीत्यचिद्वत् ब्रह्मणोऽप्यनित्यत्वं दुष्परिहरम् । अन्यथात्वं त्रयाणामप्यविशिष्टमितिकथनेन साम्यमेवाऽऽप-

---

पूर्वावस्थाश्रयनियन्तृत्वमेवोपादानत्वमित्यस्याऽपि परिभाषामात्रत्वात् । किञ्चोत्पाद्यमुपादेयं भवति, उत्पाद्यं च भवन्मते न द्रव्यं, तस्य नित्यत्वस्वीकारात्, शब्दस्पर्शादिलक्षणावस्थाया एवोत्पत्त्या तस्या ब्रह्मणा सहाऽभेदगन्धस्याऽभावेन तज्ज्ञानेन तस्या ज्ञातत्वोपपादनासम्भवादित्यवधेयम् ।

द्यते । यदि च मया स्वसङ्केतबलेन त्रयाणामपि विकाराणां विकारित्वलक्षणसाम्येऽपि शास्त्रीयपरिभाषानुसारेण स्वरूपान्यथात्वज्ञानसङ्कोचविकासरूपविकारित्वमेवाऽनिष्टावहं, अन्यविधन्तु नाऽस्माभिरनिष्टापादकमङ्गीक्रियत इत्युच्यते, तथा सति मृद्द्रव्यस्य घटरूपेण यथा परिणामस्तथा तन्तोर्न भवति, तस्य तु पटरूपेणैव परिणामो भवतीति घटरूपेण परिणाम एवाऽनित्यत्वापादकः, न पटरूपेण परिणामोऽनित्यत्वापादक इति तन्तुर्नित्य एव, मृद्द्रव्यमेवाऽनित्यमिति यदि कश्चिद्ब्रूयात्तदा तत् कथनमसङ्गतं न स्यात्, तथाऽपरः कश्चित् घटादेः शब्दादिरूपधर्मान्यथात्वमेव विकारित्वापादकं, पटस्याऽग्निसंयोगादिनाऽवस्थान्तरापत्तिर्न विकारित्वापादिकेति यदि ब्रूयात्तदा तत् कथनमसङ्गतं न स्यात्, अतः स्वसङ्केतानुसारेण स्वरूपान्यथात्वं धर्मान्यथात्वमेवाऽनित्यत्वापादकं, न विकारिवैशिष्ट्यमनित्यत्वापादकमिति कथनमसङ्गतमेव । पूर्वावस्थामपहायाऽवस्थान्तरप्राप्तिरेव विकार इति हि विकारविदो वर्णयन्ति, नूतनस्य धर्मस्य सम्बन्धस्य वोत्पत्तौ स्वीक्रियमाणायामेतद्विकारलक्षणमविशिष्टमिति विकारित्वप्रयुक्तानित्यत्वापत्तिस्तदवस्थैव । यथा हि सहस्रतन्तुकस्य पटस्य द्वित्रेषु तन्तुषु व्यपगतेषु तत्संयोगरूपासमवायिकारणस्य विनाशात्सहस्रतन्तुकस्य पटस्य भासमानस्वरूपेऽन्यथाभावस्य स्पष्टं सर्वजनानुभवविषयत्वाभावेऽपि विनाशो नैयायिकैरभ्युपगतस्तद्वदेव भवन्मतेऽपि किञ्चिद्वैलक्षण्यमात्रेणैवाऽवस्थान्तरापत्तिः स्वीक्रियत इति विनाशः स्वीकृतः स्यात् ! इतरथा सर्वस्याऽपि प्रपञ्चस्य ब्रह्मण इव प्रतिक्षणं यत्किञ्चिद्वैलक्षण्यसत्त्वेऽपि नित्यत्वमेव स्वीकर्तव्यं भवेत् !

तथा च सति साम्येन नियाम्यनियामकभावादिकं किमपि नोपपद्येतेति सर्वैव मीमांसोन्मूलिता स्यादित्यकामेनाऽपि भवता ब्रह्मणः कूटस्थत्वं कामयमानेन सर्वप्रकारोऽपि विकारः परिहर्तव्यः । तथा चाऽविकारिणः कथं कारणत्वं सिद्ध्यतीति विरोधस्तदवस्थ एव ।

'एतेन—'चिदचिदंशयोरेव विकारित्वं, ब्रह्मणस्तु विकारिवैशिष्ट्यमात्रं, न विकारित्वमित्युक्तं—'इत्यप्यपास्तम् । भाष्यकृता स्पष्टमेव ब्रह्मण्यपि विकारसद्भावप्रतिपादनात्—'इत्यादिकथनमपि स्वीयभाष्यतात्पर्यानवबोधविजृम्भितमिति मन्यामहे । विकारिवैशिष्ट्यातिरिक्तविकारस्यैव भवद्भाष्यकृताऽप्रदर्शनात्, विकारिवैशिष्ट्यरूपविकारस्यैव प्रतिपादनात्, अतो विकारित्वं नाऽस्तीति कथनमाग्रहकृतमित्यपि तव लेखनं दुराग्रहकृतमेव । भवदभिमतभाष्याक्षरलब्धानिष्टावहाविकाराभावाभिप्रायेणैव शास्त्रिमहाशयेन विकारित्वाभावप्रतिपादनात्, विकारिवैशिष्ट्यरूपविकारित्वं नाऽस्तीत्यप्रतिपादनाच्च ।

यच्च—प्रकारद्वयस्य प्रकारिणा सममपृथक्सिद्धिलक्षणसंयोगविशेषमेव सम्बन्धं स्वीकृत्य तस्य व्यापकत्वव्याघातकत्वाभावप्रदर्शनपूर्वकं नैयायिकाद्युक्तदिशा विभूनामपि संयोगित्वाङ्गीकारेण—'निरवच्छिन्नसंयोगसम्बन्धावच्छिन्नस्वभिन्नद्रव्यत्वसमानाधिकरणभेदप्रतियोगितानवच्छेदकत्व—'रूपव्यापकतापरिष्कारेण महानैयायिकत्वप्रकटनं, तदप्यश्रुतवेदान्तमीमांसावृत्तान्तस्य तवैव शोभते । तथा हि भवद्भाष्यकारः—'महद्दीर्घवद्वा ह्रस्वपरिमण्डलाभ्यां—'इति-

सूत्रव्याख्यानावसरे—

'वैशेषिकाभ्युपगतपरमाणुवादप्रक्रियां दूषयन् परमाणूनां प्रदेशभेदाभावे सति सहस्रपरमाणुसंयोगेऽपि सत्येकस्मात्परमाणोरनतिरिक्तपरिमाणतयाऽणुत्वह्रस्वत्वमहत्त्वदीर्घत्वाद्यसिद्धिः स्यात् । प्रदेशभेदाभ्युपगमे परमाणवोऽपि सांशाः स्वीयैरंशैस्ते च स्वकीयैरंशैः-'

इत्यादिग्रन्थेनाऽनवस्थां प्रतिपादयन् निरवयवाणां संयोगं नाऽभिप्रैति । संयोगस्य चाऽव्याप्यवृत्तित्वेन निष्प्रदेशस्य संयोगोऽव्याप्यवृत्तिर्न भवितुमर्हतीति तस्य व्याप्यवृत्तित्वाभ्युपगमे चिदचिद्वर्गस्य ब्रह्मणा समं सर्वात्मना संयोगस्याऽवर्जनीयतया स्वाभिमतं परिच्छिन्नत्वं विहतं स्यात्, अथ वा ब्रह्मण एव व्यापकत्वं विनष्टं भवेदित्यवश्यमभ्युपगन्तव्यमिति व्यापकताभञ्जकत्वाभावं संयोगस्य भवानेव विचारयतु ।

तथा च-निरवच्छिन्नसंयोगस्याऽप्रसिद्धत्वेन तत्सम्बन्धावच्छिन्नावच्छेदकताकप्रतियोगिताकभेदस्यैवाऽप्रसिद्धत्वात्तद्घटितव्यापकत्वनिर्वचनमतिमन्दम् । निरवच्छिन्नसंयोगस्वीकारे त्रयाणामपि समानपरिमाणत्वमेव प्रसज्येतेति गतमात्मनोऽणुत्ववादेन तथेश्वरस्याऽपरिच्छिन्नत्ववादेन च ! नैयायिकादिभिरप्यात्माकाशादीनां सर्वमूर्तैः समं सावच्छिन्न एव संयोग इष्यते, न तु निरवच्छिन्नः, परं सोऽपि भवद्भाष्यकारैर्निरवयवसावयवयोश्च संश्लेषलक्षणसंयोगं जतुकाष्ठवदनभ्युपगच्छद्भिर्निरस्त इति तदभ्युपगमे स्वसिद्धान्तविरोधानुकूलमाचरितं स्यात् !

किञ्च—

'अप्राप्तयोस्तु या प्राप्तिः सैव संयोग ईरितः—'

इत्यादिनैयायिकोक्तप्रकारेण परिच्छिन्नानामपरिच्छिन्नेन ब्रह्मणा सहाऽप्राप्तेरनभ्युपगमेन तदीयसम्बन्धस्य संयोगविशेषरूपत्वं कथं वर्णयितुं शक्यम् ? कथञ्चित् नैयायिकादिमते मूर्तद्रव्यस्याऽपरिच्छिन्नैराकाशादिभिरप्राप्तिपूर्वकप्राप्तौ स्वीक्रियमाणायामपि भवन्मते चिदचितोः सर्वावस्थास्वपृथक्सिद्धत्वेनाऽप्राप्तेः कथञ्चिदप्युपपादयितुमशक्यतया तद्दृष्टान्तेन स्वपक्षसमर्थनम्—

'अन्धस्येवाऽन्धलग्नस्य विनिपातः पदे पदे—'

इत्याभाणकं नाऽतिवर्तते ।

ये हि वेदान्तिनो नैयायिकाभिमतं संयोगनामकं पदार्थमेव नाऽभ्युपगच्छन्ति, कुतस्तरां निरवयवसावयवयोरपृथक्सिद्धयोः स्वीकुर्युः ? अतश्चिदचिदीश्वराणां संयोगकथनं युक्तिविरुद्धं शास्त्रविरुद्धं स्वसमयविरुद्धं च ।

तथा हि—भवदीयभाष्यग्रन्थे एकविज्ञानेन सर्वविज्ञानप्रतिज्ञोपपत्तये ब्रह्मजगतोरभेदस्याऽपेक्षिततया तस्य च स्वयमनङ्गीकारात्स्वरूपैक्यप्रयुक्तैक्याभावेऽपि देशबुद्धिजात्यादितः सर्वे गावः सायं गोष्ठे एकीभवन्ति, सर्वे राजान एकीभूताः, एको व्रीहिरित्यादिस्थलेष्वैक्यव्यवहारोपपादनवत् प्रकृते जगद्ब्रह्मणोः स्वरूपतोभिन्नयोः केनचिदाकारेणाऽभेदो वक्तव्यः, स क इति विचारे अपृथक्सिद्धविशेषणत्वमिति सहस्रकृत्वोऽभ्यस्तापृथक्सिद्धैक्यमेव भवद्भाष्यकृत्सम्मतम् । 'सिद्धिर्नाम स्थितिः प्रतिपत्तिश्च, पृथक्स्थितिप्र-

तिपत्त्ययोग्यः—'इतित्वदीयग्रन्थेषु बहुशो व्यवहारदर्शनात्, स्थितिप्रतिपत्त्योरैक्यमवयवावयविजातिव्यक्तिगुणगुणिस्थलेषु पृथक्स्थितिप्रतिपत्त्योरभावादवसीयते, न तु संयोगविशेषलक्षणमपृथक्सिद्धत्वं भाष्याद्यनुमतमिति तदुपन्यस्यन् भवान् स्वस्य स्वमतापरिज्ञानं सूचयति। ननु घटो भूतले वर्तते, नीलादिगुणास्तु घटे, तथा गन्धरसशब्दानां द्रव्यप्रतिपत्तिमन्तरेणाऽपि पृथक्प्रतिपत्तिर्दृष्टा, अतः कथं प्रतिपत्त्यैक्यमुपपद्यताम्? न च तावेवाऽयुतसिद्धौ विज्ञातव्यौ ययोर्द्वयोरविनश्यदेकमपराश्रितमेवाऽवतिष्ठत इति तार्किकोक्तमयुतसिद्धत्वमेवाऽपृथक्सिद्धत्वमिति वाच्यम्। तथा सति नियताश्रयाश्रयिभावलक्षणायुतसिद्धत्वस्य भेदैकसाधकत्वेन प्रकारैक्यासाधकत्वादिति चेन्न।

'पृथक्प्रतिपत्तिकार्याणामेव पृथगुत्पत्त्यादिकमपेक्षितम्—'

इत्यादिश्रुतप्रकाशिकादिग्रन्थपर्यालोचनायां यस्योत्पत्तिविनाशापक्षयसत्तादिकमाश्रयोत्पत्त्यादिनैव व्यवह्रियते तत्तदपृथक्सिद्धमिति फलति। ततश्च यदुत्पत्त्योत्पद्यत इति व्यवह्रियते, यत्सत्तया सदिति व्यवह्रियते, न तु सत्तान्तरमपेक्षते, तत्तदपृथक्सिद्धमिति। ततश्च विकृतेः प्रकृतिसत्तातिरिक्तसत्ताशून्यत्वादभिन्नसत्ताककारणत्वमुपादानत्वं ब्रह्मण इति ब्रह्मव्यतिरिक्तचेतनाचेतनवर्गं प्रति ब्रह्मणोऽपृथक्सिद्धकारणत्वलक्षणाभिन्नसत्ताककारणत्वरूपोपादानत्वप्रकृतित्वापरपर्यायात्मत्वस्य सत्त्वादात्मभूते तस्मिन् ज्ञाते इतरत्सर्वं ज्ञातमेव, इतरस्य पृथक्प्रतिपत्तियोग्यस्य ज्ञातव्यस्याऽभावात्, तत्सत्तया सदितिव्यवहारवत् तज्ज्ञाततया ज्ञातमिति व्यवहर्तुं शक्यत्वात्,—इत्येव भवदीया प्रक्रिया। तां विस्मृत्या-

ऽलीकं संयोगविशेषं ब्रुवाणः कथं नोपहास्यो भवेदिति सुधिय एव विचारयन्तु।

वस्तुतस्त्वेवंरूपमपृथक्सिद्धत्वं विवर्तवाद एव पर्यवस्यति, तथा हि-प्रपञ्चस्य ब्रह्मसत्ताव्यतिरिक्तसत्ताभावे शुक्त्यादावारोपितस्य रजतस्य मिथ्यात्वमिव प्रपञ्चस्याऽप्यसत्यत्वमेव प्रसज्येत। न च गुणगतजात्यनङ्गीकर्तृमते गुणेषु सत्ताप्रतीतेर्द्रव्यगतसत्ताविषयकत्वेऽपि यथा न रूपादिमिथ्यात्वं, यथा वा द्रव्यगतगुणादिषु द्वित्वैकत्वादिसङ्ख्याप्रतीतेर्द्रव्यगतसङ्ख्यानिर्वाह्यत्वेऽपि रूपादिसङ्ख्याप्रतीतेर्न भ्रान्तित्वं, एवं प्रपञ्चे सद्बुद्धेर्ब्रह्मसत्ताविषयकत्वेऽपि न भ्रान्तित्वं, न वा प्रपञ्चस्य मिथ्यात्वमिति वाच्यम्। गुणेषु जात्यनङ्गीकारस्य कुत्राऽप्यदृष्टचरत्वात्। दृष्टत्वेऽपि वा सत्ताप्रतीतेः कारणसत्ताविषयकत्वे प्रपञ्चः सन्निति कथं सिद्ध्येत्? तत्प्रतीतेर्भ्रान्तित्वं वा कथं न स्यात्? न हि रजतधर्मस्य रजतत्वस्य शुक्तौ प्रतिभासेऽभ्रान्तित्वं कश्चिदभ्युपैति। घटः सन् पटः सन्नित्यादिसत्प्रतीत्यैव तस्य सद्रूपत्वसिद्धिरिति चेन्मैवम्। यदीयं प्रतीतिः सत्ताजातिविषयिणीत्युच्यते, तर्हि सा सत्ता स्वयं सती असती वा? यदि सती, तर्हि किं तस्यां सत्त्वम्? सत्ताजातिमत्त्वं चेत, असिद्धिः, जातौ जातिमत्त्वानङ्गीकारात्। समवायेन जातेर्जातिमत्त्वानङ्गीकारेऽपि समवायघटितसामानाधिकरण्यसम्बन्धेन जातिमत्त्वं विद्यत एवेति नाऽनुपपत्तिरिति चेत्,-भ्रान्तोऽसि। तथा सति सम्बन्धांशेऽनुगताकारा प्रतीतिर्न स्यात्। समवायानभ्युपगमेन च द्रव्यादौ सद्बुद्धेः समवायविषयकत्वं, जात्यादावेकार्थसमवायविषयकत्वमिति विभागस्यैव वक्तुमशक्यत्वात्। तावताऽपि यया सत्तया

सत्तायाः सत्त्वं, तस्याः किं सत्त्वमित्यनुयोगे सत्तान्तरस्यैव शरणीकरणीयतया सत्तान्तरपरम्परारोपमूलकानवस्थितिं कः समादध्यात् ? प्राग्लोपात्रिनिगम्यत्वप्रमाणापगमैरनवास्थितिमास्थातुः सुश्रुतादिमहर्षिप्रयोगैरप्यचिकित्स्यां त्रिदोषीं वा भिषग्जनशरण्यं श्रीभगवन्तं श्यामसुन्दरं विना कश्चिकित्सतु ? सत्ताया असत्त्वे असत्या सत्तया कथं प्रपञ्चस्याऽमिथ्यात्वमुपपादयितुं शक्यम् ? अतः सत्ताजातिविषयकत्वमङ्गीकृत्य सद्बुद्ध्या प्रपञ्चस्याऽमिथ्यात्वं न प्रसाधयितुं शक्यम् ।

स्यादेतत् । न वयं सत्ताजातिमत्तया प्रपञ्चस्य सत्यत्वं साधयामः, येन विकल्पा अपरिहार्याः स्युः, किं तु सद्बुद्धेर्भवन्मते निर्धर्मकब्रह्मणः सद्रूपत्ववत् सत्तादात्म्यविषयकत्वमङ्गीकुर्मः, तेन च प्रपञ्चस्य सद्रूपत्वसिद्धिरिति । नैतदेवम् । सन् सन्निति प्रतीतेरनुगताकारत्वेन सद्रूपस्यैकत्वं स्वीकरणीयम्, यदि घटपटादिभेदेन सद्रूपं नाना भवेत्तर्हि प्रतीतेरनुगताकारत्वं नैव स्यादित्यगत्या एकत्वस्यैव स्वीकरणीयतया सद्बुद्धेस्तादृशानुगतसदभेदविषयकत्वे घटपटादीनामपि परस्परमभेदप्रसङ्गेनाऽद्वैतवाद एव प्रत्यक्षप्रतीत्या साधितो भवेदिति वृद्धिमिच्छतो मूलमपि ते नष्टमिति हा कष्टतरम् ! तथा सति भेदव्यवहारो दत्तजलाञ्जलिः प्रसज्येत ! न च घटाभिन्नसद्रूपाभिन्नपटस्य घटाभिन्नत्वमन्तरा सद्रूपादभेदो घटपटयोः स्थापयितुं शक्यः, तथा च घटपटादीनामननुगतत्वात्सद्रूपस्य चाऽनुगतत्वादनुवर्तमानव्यावर्तमानयोश्च पारमार्थिकाभेदस्य जन्मसहस्रेणाऽपि व्यवस्थापयितुमशक्यतया कल्पिताभेदस्यैवाऽङ्गीकर्तव्यत्वेन घटः सन्नित्यादिप्रत्यक्षप्रतीत्यैव घटपटादीनां सद्रूपे ब्रह्मणि कल्पितत्वसि-

द्धिः। तथा च प्रयोगः-

घटादयः स्वानुगतप्रतिभासे वस्तुनि कल्पिताः, विभक्तत्वात्, यथा सर्पमालादिकं स्वानुगतप्रतिभासे रज्ज्वा इदमंशे विभज्यते, एवं ब्रह्मण्यनुगच्छति घटादिकं विभज्यते, सन् घटः सन् पट इत्यादि। स्वानुगतप्रतिभासत्वं च स्वतादात्म्येन स्वरूपतोभानयोग्यत्वं, स्वतादात्म्यविषयतानिरूपितनिरवच्छिन्नप्रकारताश्रयत्वमिति यावत्। सप्तम्या व्यापकत्वमर्थः, व्यापकतानिरूपकत्वं च तादात्म्यसम्बन्धेन। कल्पितत्वं च ज्ञाननिवर्त्यत्वं, स्वाभाववति ज्ञेयत्वं वा। तथा च घटादयः स्वतादात्म्यविषयतानिरूपितनिरवच्छिन्नप्रकारताव्यापकस्वानिवर्तकधीविषयताकाः, उक्तप्रकारताव्यापकस्वात्यन्ताभावका वेति साध्यं पर्यवसितम्। विभक्तत्वञ्च स्वसमानसत्ताकभेदप्रतियोगित्वम्। तथा चैवम्भूतेनाऽनुमानेनाऽपि घटादेः कल्पितत्वसिद्धिः(१)। तथा चाऽपृथक्सिद्धत्वस्योक्तलक्षणमिथ्यात्व एव पर्यवसानात्तद्बलेन प्रपञ्चस्य सत्यत्वमाश्रित्य प्रतिज्ञोपपादनं नरविषाणायितमिति कृतबुद्धय एव विचारयन्तु।

अभ्युपगम्याऽप्युक्तविधमपृथक्सिद्धत्वं जगत्सत्यत्वं चैकविज्ञानेन सर्वविज्ञानप्रतिज्ञा कथमुपपाद्यत इति वक्तव्यम्। भगवद्विग्रहगोपुरप्राकारनित्यसूरिप्रभृतिनित्यविभूतिं प्रति ब्रह्मणः कारणत्वाभावेनोपादानत्वाभावादात्मत्वासम्भ-

---

(१) इदञ्चाऽनुमानं-'यावद्विकारं तु विभागो लोकवत्-'इतिसूत्रमूलकम्। विभक्तत्वव्यापकं विकारत्वम्। विकारत्वं च स्वानुगतप्रातभासे वस्तुनि कल्पितत्वमित्यर्थः। तेनाऽनाद्यविद्यादौ न व्यभिचारः। यदीदं जगदुक्तलक्षणविकारो न स्यात्तर्हि भेदप्रतियोगि न स्यात्, तदभिन्नाभिन्नस्य तदभिन्नत्वनियमादित्यनुकूलतर्कश्चाऽनुसन्धेयः।

वेनाऽऽत्मभूते तस्मिन् विज्ञातेऽपि तेषां विज्ञातत्वासम्भवात् । ननु—'प्रतिज्ञाहानिरव्यतिरेकात्—'इतिसूत्रे वियदादेर्ब्रह्मण उत्पत्त्यनभ्युपगमे एकविज्ञानेन सर्वविज्ञानप्रतिज्ञाहानिप्रसङ्गाद्वियदाद्युत्पत्त्यभ्युपगमवन्नित्यविभूतेरप्युत्पत्त्यादिमत्त्वमभ्युपगम्यते, इतरथा प्रतिज्ञाहानिप्रसङ्गादिति चेत्त्वत्सिद्धान्तस्य तदानीं विलोपापत्तेः । त्वया विभूत्यादीनां नित्यत्वग्राहकप्रमाणानुसारेण नित्यत्वस्यैव व्यवस्थापितत्वात् । न च नित्यत्वग्राहकप्रमाणानुसारात्-'येनाऽश्रुतं श्रुतं-','सर्वमिदं विज्ञातं भवति-'इत्यादौ अश्रुतादिशब्दानां नित्यविभूतिव्यतिरिक्तपरतया सङ्कोचः क्रियत इति वाच्यम् । 'आकाशवत्सर्वगतश्च नित्यः-','वायुश्चाऽन्तरिक्षं चैतदमृतं-',आकाशं नित्यं, निरवयवद्रव्यत्वादित्यादिप्रमाणबलेनाऽश्रुतादिशब्दानामाकाशव्यतिरिक्तपरत्वमेव स्यादिति वियदुत्पत्त्यधिकरणतद्भाष्यादिकं त्वया कदर्थितं स्यात् ! प्रतिज्ञावाक्यं च निर्हेतुकं निष्पीडितं भवेदित्यपृथक्सिद्धत्वं प्रतिज्ञोपपादनं च न विपश्चितां समाजे वक्तुमपि शक्यमित्यास्तां तावत् । बहुवक्तव्येऽपि विस्तरभीतेर्नेयमत्रोदास्महे ।

एवञ्च स्थूलसूक्ष्मचिदचिद्विशिष्टब्रह्मण एव कारणत्वं कार्यत्वं चेति पक्षो निर्मूल इति सिद्धम् ।

इदमपि च विचारमर्हति—चिदचितोः स्थूलत्वं सूक्ष्मत्वं च कीदृशं ? अणुमहत्परिमाणरूपमुत प्रत्यक्षयोग्यत्वतदभावरूपं ? नाऽऽद्यः, अणोरचिदंशस्यैकत्वे निरवयवत्वेन महत्परिमाणवत्त्वानुपपत्तेः । उपपत्तौ वा चिदंशस्याऽपि महत्परिमाणवत्त्वापत्त्या स्वसिद्धान्तविरोधोऽनित्यत्वं चाऽऽपद्येयाताम् । नानात्वे नैयायिकमतवदारम्भवादमभ्युपगम्यैव म-

हत्परिमाणवत्त्वस्योपपादनीयतया नैयायिकमतदूषणातिदेशप्रसङ्गेन स्वसिद्धान्तविरोधप्रसङ्गात् । चिदंशस्य चाऽणुत्वाभ्युपगमेन महत्त्वस्याऽङ्गीकारेऽनित्यत्वापत्त्या सिद्धान्तविरोधापत्तेः। द्वितीयपक्षे कालाकाशाद्यनेकपदार्थेष्वेतादृशस्थूलत्वस्याऽभावप्रसङ्गात् । प्रत्यक्षे महत्त्वस्य कारणत्वाच्चिदंशे प्रत्यक्षविषयत्वस्य कदाऽप्यभावेन चिति सूक्ष्मत्वस्थूलत्वयोर्वक्तुमशक्यत्वात् । नामरूपविभागानर्हत्वं सूक्ष्मशब्दार्थ इतिश्रुतप्रकाशिकानुरोधेन विभागानर्हत्व–तदभावयोः सूक्ष्मस्थूलशब्दार्थत्वे विभागस्य भेदैकरूपतया भेदस्य च सार्वदिकत्वेन तदर्हताया उभयदशायामप्यविशिष्टत्वात् स्थूलावस्थायामपि सूक्ष्मत्वव्यवहारापत्तिरतो विभक्तव्यपदेशानर्हत्व–तदभावयोरेव तद्रूपत्वोपवर्णने प्रलयदशायां विभक्तव्यवहाराभावप्रयोजकमन्यदेव किञ्चित्सूक्ष्मत्वं वाच्यं, तच्च विभक्तव्यपदेशानर्हत्वं चेदात्माश्रयादिकं भवेत् । तथाऽर्हत्वस्य योग्यताविशेषरूपत्वेनाऽवच्छेदकरूपापरिज्ञाने दुर्वचत्वादवच्छेदकीभूतं रूपं यदि चित्त्वादिकं स्यात्तर्ह्युभयदशायामपि तस्य सत्त्वेनाऽऽपत्तिस्तदवस्थैवेति यत्किञ्चिदेतत् ।

किञ्च जिज्ञास्यमज्ञातं ब्रह्म सर्वथाऽसम्भावितं सम्भावयितुं–'जन्माद्यस्य यतः–'इतिसूत्रेण श्रुत्युक्तजगज्जन्मादिकारणत्वं लक्षणं प्रतिपादनीयम् । तत्र जगच्छब्देन स्थूलचिदचिद्विशिष्टं ब्रह्म परिगृह्य तस्य कार्यत्वोपपादनद्वारा तत्कारणत्वेन ब्रह्म किमर्थं लक्षणीयम् ? किं ब्रह्म स्वस्य कारणं भवति न वेतिसंशयः पूर्वं प्रसक्तः ? येनैतादृशकार्यकारणभाव उच्यते, न खल्वनुन्मत्तः कोऽपि स्वस्य स्वयं कारणं भवति न वेति जिज्ञासते प्रतिपादयति वा, किं पुनस्तद्ब्रह्म ? यज्जिज्ञास्यमि-

त्याशङ्कया हि जन्माद्यधिकरणं प्रवृत्तं, कार्यकारणावस्थयोर्ब्रह्मणोऽभिन्नत्वेनोभयावस्थस्याऽपि तस्य पूर्वमज्ञातत्वात्कार्यावस्थापन्नस्याऽसम्भावितस्य तस्यैव लक्षणत्वकथनमसङ्गतमेव, प्रसिद्धं हि लक्षणं भवति, नाऽप्रसिद्धमतो ब्रह्मणः कार्यत्वप्रसाधनेन लक्षणत्वकथनमनुपपन्नम् । अतो जगच्छब्देन ब्रह्मभिन्नस्यैव परिग्रहे कृते तज्जन्मस्थितिलयानां प्रसिद्धत्वेन ब्रह्मलक्षकत्वसम्भवात्तदधिकरणपर्थवद्धत्वलीसकाण्डे ब्रह्मणो जगच्छब्देन परिग्रहो न तीक्ष्णबुद्धितां सूचयति ।

किञ्च कार्यत्वं वास्तवमुत कल्पितम् ? आद्ये चिदचिद्वर्गस्य ब्रह्मोपादानकत्वमभ्युपगच्छतां भवतां मते उपादानोपादेययोः कारकव्यापारार्थवत्त्वाय भेदस्याऽङ्गीकर्तव्यतया तदनुरोधेन ब्रह्मण्यपि भेदप्रसङ्गेनैकमेव ब्रह्मोभयावस्थं भवतीतिसिद्धान्तभङ्गप्रसङ्गः । किञ्च स्वं यदि स्वजन्यं स्यात् तदा स्वभिन्नं स्यादितितर्केण ब्रह्मणि कार्यत्वकारणत्वरूपविरुद्धधर्माभ्युपगमो दुर्घटः । द्वितीये वेदविन्मतप्रवेशापत्तिः । न च वेदविन्मतप्रवेशापत्त्यपेक्षयाऽधिकाऽऽपत्तिस्तव दुःखदेति पारिशेष्याद्वास्तवमेवाऽभ्युपगन्तव्यम् ।

एवञ्च पूर्वमुपपादितरीत्या सर्वविधस्याऽपि विकारस्य स्वरूपान्यथाभावविकार एव पर्यवसानेनाऽनित्यत्वापादकतया निराबाधं शक्यमेवमनुमातुं—

'त्वन्मतसिद्धः परमेश्वरोऽनित्यः, विकारास्पदत्वात्, घटवत्—'इति ।

यत्तु—साक्षात्सम्बन्धेन परिणामरूपविकारवत्त्वमुपाधिः, मृदादौ साध्यव्यापकत्वात्, पक्षे साधनाव्यापकत्वाच्चेति, तद्देवं

सति प्रत्युक्तम् । पूर्वोक्तरीत्या साक्षात्सम्बन्धेन परिणामवत्त्वस्य ब्रह्मण्यपरिहार्यत्वात् ।

वस्तुत उपाध्युद्भावनं लेखकस्याऽज्ञानमूलकमेव, शास्त्रिमहाशयेन हि विकारिवैशिष्ट्यस्य स्वरूप–तादात्म्यसम्बन्धरूपत्वे विकारित्वेन सावयवतयाऽनित्यत्वापातादित्युक्त्वेदमनुमानं प्रदर्शितम् । तस्मिन्ननुमाने साक्षात्सम्बन्धेन परिणामवत्त्वस्योपाधित्वकथनं पक्षे साधनाव्यापकत्वप्रदर्शनं च कथं शोभते ? इति कृतबुद्धय एव निष्पक्षपाता विचारयन्तु । ईदृशमेव बुद्धिवैभवमवलम्ब्य भवत्कृतः काशीस्थेषु विद्वद्वरेष्वसूयालुत्वाद्यारोपः शोभतेतराम् !

यदपि—'त्वन्मतसिद्धः परमेश्वरोऽनित्यः—'इत्याद्यनुमाने जडत्वेन सोपाधिकत्वशङ्कानिराससमये शास्त्रिमहाशयप्रदर्शितं धर्मज्ञानगतप्रकाश एव तस्य साध्याव्यापकत्वं निरसितुकामेन भवता–'धर्मभूतज्ञानस्य सङ्कोचविकासाङ्गीकारेऽपि प्रकाशाख्यस्याऽतिरिक्तस्य कस्यचिद्धर्मस्याऽस्माभिरनङ्गीकारात् । स्फुरणमेव प्रकाशः । तच्च व्यवहारानुगुण्यमात्रम् । नाऽतिरिक्तः कश्चन पदार्थः, सङ्कोचविकाससद्भावमात्रेण न कस्यचित्पदार्थस्याऽनित्यत्वम्, दीपप्रभायाः कुड्यादितिरोधानेन सङ्कोचस्य तदभावे विकासस्य च स्वीकारेऽपि तत्र प्रभाया विनष्टत्वासम्प्रतिपत्तेः । तेन ज्ञानस्याऽतिरिक्तधर्मत्वाङ्गीकारेऽपि वा तस्य सङ्कोचविकासाङ्गीकारेऽपि वा न साध्यव्यापकत्वासिद्धिः–' इत्यादि लिखितम् । तन्न प्रामाणिकतुलामधिरोहति । स्फुरणस्वरूपस्यैव पदार्थस्याऽङ्गीकारेण तत्रैव त्वदीयोपाधेः साध्यव्याप-

कत्वासम्भवात् । त्वयैव स्पष्टाक्षरेण व्यवहारानुगुण्यरूपस्य तस्य धर्म्यतिरिक्तस्य स्वीकारात्। धर्म्यनतिरिक्तत्वेऽपि तत्रैव सङ्कोच-विकाससत्त्वेनाऽनित्यत्वस्याऽपि सत्त्वादुपाधेः साध्याव्यापकत्व एव विश्रामात् ।

सङ्कोचविकासयोरनित्यत्वापादकत्वं नाऽस्तीतिकथनं च सूत्र-भाष्यविरुद्धं यथाश्रुतप्रतिपत्तृशिष्यप्रज्ञाप्रतारणमात्रं च । भ-वद्भाष्यकारेण हि जीवस्य पुत्तिकाशरीरपरिमाणस्य गजा-दिशरीरेष्वकात्स्न्यमिति दोषमुद्भाव्य सङ्कोचविकासाभ्यामु-क्तदूषणाभावशङ्कायां—'न च पर्यायादप्यविरोधो विकारा-दिभ्यः—'इतिसूत्रेण विकारतत्प्रयुक्तानित्यत्वादिदोषप्रसक्त्या जै-नाभिमतजीवस्येव धर्मज्ञानस्याऽपि सङ्कोचविकासशालिनो घ-टादिवदनित्यत्वस्य प्रतिष्ठापनात् ।

किञ्च सङ्कोचविकासाववयवविनाशोत्पत्तिरूपौ, तत्कथं सङ्कोचविकासादिधर्मकस्य नित्यत्वं स्यात् ? दीपप्रभादृष्टान्तेन च नाऽनित्यत्वं वारयितुं शक्यम्, दीपप्रभायाः सङ्कोचस्या-ऽनङ्गीकारात् । शरावाच्छादने शेषप्रभाविनाशात्, अनाच्छा-दिता हि ज्वाला आत्मसमीपे प्रभामण्डलमारब्धुं समर्था, न त्वाच्छादिता ।

एतेनैव विकासोऽपि प्रत्युक्तः । अन्य एव ह्यवयवाः प्रचीय-माना विस्तारं जनयन्ति । न तावतामेव विकासः । न च पटाव-यवानामिव ज्ञानावयवानामेकदेशवृत्तित्वं भिन्नदेशवृत्तित्वं च सङ्कोचविकासाविति वक्तुं युक्तम् । मणिकादिवृत्तीनां ब-हूनां जलावयवानामतिसूक्ष्मघटे सङ्कुचितानामवस्थानप्रसङ्गात् । पुनश्च तैर्विकसितैरतिस्थूलघटस्य पूरणप्रसङ्गाच्च ।

दृष्टान्तोऽप्यसिद्धः । पटावयवानां मूर्तत्वेन भिन्नदेशाना-

मेव तेषां तूणीरवर्तिनां बाणानामिव तत्सान्निध्येन सङ्कोचशब्दितत्वात् । अन्यथा एकस्मिन् पटावयवे तन्तौ बहूनां पटावयवानां तन्तूनां वर्तनसम्भवात् पटस्याऽप्रत्यक्षत्वं स्यात् । न च ज्ञानस्य मूर्तत्वमिष्यते, मूर्तत्वाभावे चाऽक्रियत्वेन सङ्कोचविकासकथनस्याऽत्यन्तासङ्गतत्वात् ।

एवं धर्मभूतज्ञानाश्रयत्वं ज्ञानरूपस्य धर्मिणः, एतत् तान्त्रिकसम्प्रदायविरुद्धम् । तथा विभुरूपस्य धर्मस्याऽऽश्रयत्वमणोः, विभुनः सङ्कोचविकासवत्त्वं च ।

एवं धर्मस्य ज्ञानरूपत्वाङ्गीकारे धर्मिणो ज्ञानरूपत्वाङ्गीकारस्य किमपि प्रयोजनं न पश्यामः । धर्मभूतेनैव ज्ञानेनाऽऽत्मनश्चेतनत्वं सकलार्थज्ञातृत्वं च सिद्ध्यतीति धर्मधर्मिरूपेण ज्ञानद्वैविध्यस्वीकरणं प्रज्ञाया अतिवृद्धिं सूचयति !

अस्तु वा यत् किमपि । जडत्वस्य साध्यव्यापकत्वसाधनं तु न प्रमाणपदवीमधिरोहतीत्येतावदेवाऽस्माकं मिषाधयिषितम् । तच्च सिद्धमेव । एवञ्च जगद्ब्रह्मणोर्वैशिष्ट्यस्य तादात्म्यत्वपक्ष एवाऽस्याऽनुमानस्य प्रवृत्त्या तत्पक्षे तादात्म्यप्रयुक्तजडत्वस्याऽप्यवश्याभ्युपगन्तव्यत्वेन तस्योपाधेः साधनाव्यापकत्वसमर्थनस्याऽतितुच्छत्वात् ।

यस्तु-द्वितीयविरोधस्य समाधानं चिकीर्षोस्तत्र कार्यानुकूलकृतिमत्त्वमेव कर्तृत्वमुभयवाद्यभ्युपगतं न जीवे स्वरूपान्यथात्वापादकं, कृतेर्धर्मत्वेन तदाश्रयत्वस्याऽऽत्मन्यङ्गीकारमात्रेण कर्तृत्वासिद्धौ कृत्यात्मतया जीवे परिणामाङ्गीकारस्याऽनावश्यकत्वात् । नाऽऽत्मा श्रुतेरित्यधिकरणे प्रतिपादितस्वरूपान्यथाभावाभावाविरुद्धस्य कस्यचिदप्यर्थस्य कर्त्रधिकरणेऽव्युत्पादितत्वेन विरोधोद्भावनं—'केवलकोलाहलमात्ररूपतया न

कस्मैचित्फलाय कल्पते—'इति वागाडम्बरः, सोऽपि कोलाहलमात्रपर्यवसाय्येवेति सिद्ध्यति। पूर्वं हि स्वरूपान्यथात्वधर्मान्यथात्वविकारवैशिष्ट्यरूपाणां विकाराणामेकरूपत्वस्यैव व्यवस्थापितत्वेन जीवे धर्मान्यथात्वस्य च त्वयैवाऽङ्गीकृतत्वेन कृतेरपि धर्मत्वेन तस्या नित्यत्वानभ्युपगमात्परिणामभूतत्वस्यैव वक्तव्यत्वेनाऽऽत्मगतत्वाङ्गीकारे आत्मपरिणामरूपत्वमवश्यं वक्तव्यमिति स्वरूपान्यथाभावो नाऽस्तीति स्वरूपान्यथात्वप्रतिषेधविरुद्धकथनस्य स्पष्टं प्रतिभासमानत्वात्, इति—'न कस्मैचित् फलाय कल्पते—'इत्यापादनं विस्मरणशीलस्य युक्तमेवेति मन्यामहे! यदि हि कृतेर्नित्यत्वमभविष्यत्, आत्मधर्मत्वं वा नाऽभविष्यत्, तर्हि नाऽऽत्मपरिणामरूपत्वं तस्या अभविष्यत्। न चैतद्वक्तुं समर्थोऽसि। तथा सति स्वसिद्धान्तविरुद्धमेवाऽऽचरितं स्यात्! यद्येतद्दोषपरिहारार्थं परः कृतेर्धर्मज्ञानधर्मत्वमभ्युपगच्छेत्, तदाऽपि जीवस्याऽऽश्रयभूतधर्मज्ञानद्वारा तद्रूपपरिणामित्वमापादयितुं—'अयं भावः—'इत्यादिना शास्त्रिमहाशयः प्रवृत्ते, इति—'एतेन—'इत्यारभ्य 'वेदितव्यम्—'इत्यन्तं त्वदीयं विवरणमप्यस्थाने शोकनाटनमित्यलं दिष्टहतस्य मुद्गराभिघातेन।

यदपि तृतीयं विरोधं परिहर्तुकामेन—भाष्यकारेणाऽऽत्मनोऽणुत्वस्यैव सूत्रैर्व्यवस्थापितत्वाद्धर्मधर्मिभूतयोर्ज्ञानयोर्भिन्नत्वेन धर्मभूतस्य तस्य विभुत्वप्रदर्शनाच्च न शरीरपरिमाणत्वमात्मन इति न पूर्वापरविरोधः, धर्मस्य कर्मवशात्सङ्कोचाङ्गीकारेऽपि शरीरपरिमाणत्वं नोपपद्यते, परिमाणस्य स्वाभाविकवस्तुधर्मत्वात्सङ्कोचस्य कादाचित्कस्यौपाधिकस्य च परिमाणरूपत्वासम्भवात्, दीपप्रभाया गृहाद्युपरोधेन सङ्कोचेऽप्यस्वा-

भाविकत्वेन परिमाणरूपत्वस्याऽसम्भवात् , अतो दीपप्रभादृष्टान्तेनाऽपि न तत्र स्वाभिलषितार्थसिद्धिः । तथाऽऽत्मनो धर्मज्ञानशब्दितत्वकथनमप्यज्ञानमूलकम्, धर्मधर्मिणोर्भेदेन आत्मनो धर्मज्ञानशब्दितत्वस्याऽनङ्गीकारात्,–इत्याद्युक्तम् । तत्र पाटच्चरलुण्ठिते वेश्मनि यामिकजागरणवृत्तान्तं घट्टकुटीप्रभातवृत्तान्तं चाऽनुकरोति ! तथा हि–धर्मज्ञानस्याऽऽत्मशब्दार्थत्वं स्वीक्रियते न वा ? यदि स्वीक्रियते, तर्हि आत्मनो विभुत्वमणुत्वं चोक्तमिति व्याघातेन पूर्वापरविरोधः प्रसज्येत ! यदि न स्वीक्रियते, तर्हि जैनमते ये दोषास्ते भवता स्वपक्षे प्रसज्यमाना न परिहर्तुं शक्यन्ते । सूत्रकृता हि शरीरपरिमाण आत्मेतिपक्षे क्रमेण पुत्तिकाशरीरस्थस्याऽऽत्मनो गजादिशरीरप्राप्तावकार्त्स्न्यदोषः प्रदर्शितः, आत्मशब्दार्थस्याऽणुत्वे सुतरामकार्त्स्न्यं प्रसज्येतेति धर्मज्ञानद्वारैव स दोषः परिहर्तव्यः, धर्मज्ञानस्य चाऽऽत्मशब्दार्थत्वाभावे सूत्राक्षरोपात्तेन आत्मशब्दार्थेनैव परिहरणीयोऽकार्त्स्न्यदोषस्तदतिरिक्तस्य कार्त्स्न्येन कथं परिहर्तुं शक्यते ? न ह्यनात्मकार्त्स्न्येनाऽऽत्माकार्त्स्न्यदूषणं सौत्रं परिहृतं भवतीत्यगत्या धर्मज्ञानस्याऽप्यात्मशब्दाभिधेयत्वं स्वीकर्तव्यम् । तथा सति धर्मधर्मिणोर्भेद एव विद्यत इतिकथनमुन्मत्तप्रलपितं स्यात् ! यद्युच्येत—धर्मज्ञानस्याऽऽत्मशब्दार्थत्वेऽपि आत्मकार्त्स्न्यशब्देन धर्मज्ञानद्वारैवाऽकार्त्स्न्यदोषः परिह्रियते, धर्मधर्मिणोर्भेदेऽप्यात्मशब्दार्थत्वे विरोधाभावात, न च धर्मिणो विभुत्वापत्तिः, तस्य धर्मनिष्ठत्वादिति । तदिदमसारम् । तथा सति सर्वाङ्गीणसुखदुःखाद्युपलम्भकत्वं धर्मस्यैव, न धर्मिण इत्यापत्त्या अणोर्जीवस्याऽऽनन्त्यप्रसङ्गेन—

'यच्चाऽऽप्नोति यदादत्ते यच्चात्ति विषयानिह—'

इत्यादिस्मृत्युक्तात्मलक्षणस्य धर्म एव सद्भावाद्धर्मिण्यभावाच्च नाऽणोरात्मत्वं स्यादिति गतं धर्मधर्मिणोरात्मशब्दार्थत्वेन ! तस्मादात्माकात्स्न्यपरिहाराय धर्मज्ञानस्याऽऽत्माभिन्नत्वमास्थेयम् । तथा सति तस्य विभुत्वाङ्गीकारेण तदभिन्नस्याऽऽत्मनोऽपि विभुत्वमेव स्वीकर्तव्यमित्यणुत्वं दूरनिरस्तं स्यात् ! तस्मात् सुष्ठूक्तं शास्त्रिमहाशयस्य—'धर्मज्ञानशब्दितस्याऽऽत्मनः—' इति ।

एवम्भूतस्य च ज्ञानस्य सङ्कोचविकासावभ्युपगच्छता जैनवदात्मनोऽपि शरीरपरिमाणत्वमेव व्यवस्थापितं, अभिन्नत्वात् । जैनमतापेक्षया स्वल्पस्याऽपि विशेषस्य भवन्मतेऽप्रतिभासनात् । 'न च पर्यायादप्यविरोधो विकारादिभ्यः—'इतिसूत्रे—

'न च सङ्कोचविकासरूपावस्थान्तरापत्त्याऽपि विरोधः परिहर्तुं शक्यते—'

इत्यादिभाष्येण सङ्कोचविकासवत्त्वस्य विकारित्वानित्यत्वादिदोषप्रसञ्जकत्वस्योक्तत्वात् स्वपक्षेऽपि ज्ञानस्य कर्मणा सङ्कोचविकासाङ्गीकारेणाऽनित्यत्वादिदोषस्याऽभ्युपगन्तव्यत्वात्, 'एवं चाऽऽत्माकात्स्न्यम्—'इतिसूत्रप्रदर्शितदोषपरिहारार्थं धर्मादभिन्नत्वस्य वक्तव्यतयाऽऽत्मनः शरीरपरिमाणत्वं भङ्ग्यन्तरेण स्वीकृतमेवेति वक्तव्यम् । तथा च सति भवत्कृतपरिहारस्याऽऽभासत्वं स्पष्टमेव सिद्धं भवति । भवद्भाष्येणाऽपि धर्मधर्मिणोरभेद एव प्रतिभासते । एवं हि भाष्यम्—

'एतदुक्तं भवति, यथा एकमेव तेजोद्रव्यं प्रभाप्रभावद्रूपेणाऽवतिष्ठते, यद्यपि प्रभा प्रभावद्द्रव्यगुणभूता, तथाऽपि तेजोद्रव्यमेव, न शौक्ल्या-

दिवद्गुणः, स्वाश्रयादन्यत्राऽपि वर्तमानत्वाद्रूपवत्त्वाच्च तेजोद्रव्यमेव, एवमात्मा चिद्रूप एव चैतन्यगुणक इति । चिद्रूपता हि स्वयम्प्रकाशता-'इति ।

अत्र हि-'एकमेव तेजोद्रव्यम्', 'तेजोद्रव्यमेव', 'नार्थान्तरं-'इत्यादिशब्दैः प्रभाप्रभावतोरभेदः स्पष्टं प्रतिभासते, इतरथा 'एकमेव-'इतिशब्दस्याऽसाङ्गत्यप्रसङ्गात् । 'एवमात्मा चिद्रूप एव चैतन्यगुणकः-'इतिशब्देन दीपदृष्टान्तेन धर्मधर्मिणोरभेदं सूचयति भाष्यकारः । इतरथा दृष्टान्तदार्ष्टान्तिकयोर्वैलक्षण्यप्रसङ्गात् । तस्माद्धर्मज्ञानस्य कर्मणा शरीरोपाधिकसङ्कोचविकासवत्त्वाङ्गीकारे शरीरपरिमाणत्वमात्मनोऽपरिहार्यम् । दीपप्रभाया गृहकुड्याद्युपरोधेन सङ्कोचविकासावस्थायाः परिमाणरूपत्वाभावकथनं लौकिकानुभवविरुद्धं युक्तिविरुद्धं च । सङ्कोचविकासावस्थयोः प्रभाया दृश्यमानपरिमाणस्य परिमाणरूपत्वाभावे तर्हि प्रभायाः किं परिमाणमिति भवानेव निरूपयतु । मानव्यवहारासाधारणं कारणं हि परिमाणम् । यादृशमानव्यवहारो जायते तदुचितपरिमाणमेव स्वीकर्तव्यम् । दृश्यमानस्य परिमाणव्यवहारस्य परिमाणाविषयकत्वाभावे निष्परिमाणकस्य प्रभाद्रव्यस्याऽसम्भवित्वेन किञ्चिदन्यदेव परिमाणं स्वीकर्तव्यं भवेत्, तस्य च व्यवहारविषयत्वाभावात् तस्मिन् प्रमाणं किञ्चिन्नाऽस्तीत्यननुभूयमानपरिमाणकल्पनाऽपार्थिकैवेति व्यवह्रियमाणमेव परिमाणं स्वीकर्तव्यम् । न च तत् कादाचित्कत्वेनौपाधिकत्वेन च परिमाणरूपं न भवति, तथा सति उत्पद्य द्वित्रक्षणमवस्थायोपरतस्य घटस्य निष्परिमाणकत्वमेव प्रसज्येत, कादाचित्कत्वात् । तथा मूषानिषिक्तद्रुतपारदादिप्रतिमाया नि-

ष्परिमाणकत्वं प्रसज्येत, तत्परिमाणस्यौपाधिकत्वात् । तस्मात्कादाचित्कत्वमौपाधिकत्वं च हेत्वाभासः । न च विभुत्वेनाऽभ्युपगतस्य ज्ञानस्य सङ्कोचविकासावुपपद्येते, तथा सत्याकाशस्याऽपि सङ्कोचविकासप्रसङ्गात् । अतः परिच्छिन्नमेव ज्ञानं स्वीकार्यम् । ततश्च शरीरपरिमाणत्वापत्तिस्तदवस्थैव ।

यत्तु–'दशहस्तदीर्घस्य कस्यचित्पटस्य सङ्कोचितस्याऽपि न न्यूनपरिमाणत्वव्यवहारो भवति । तस्माद्दीपप्रभादृष्टान्तेनाऽपि न तव स्वाभिलषितार्थसिद्धिः–'इत्यादिलेखनम् । तत्सङ्कोचस्वरूपानभिज्ञानकृतम् । तथा हि प्रशस्तपादभाष्ये—

'ऋजुनो द्रव्यस्याऽग्रावयवानां तद्देशविभागः संयोगश्च मूलप्रदेशैर्येन कर्मणाऽवयवी कुटिलः सञ्जायते तदाकुञ्चनम् । तद्विपर्ययेण संयोगविभागोत्पत्तौ येन कर्मणाऽवयवी ऋजुः सम्पद्यते तत्प्रसारणम्—'

इत्यनेन सङ्कोचविकासयोः सावयववस्तुन्येव नियततया पटादौ परिमाणाभेदेऽपि तत्रोक्तलक्षणसङ्कोचविकासयोरुपपन्नत्वेऽपि ज्ञाने निरवयवे कर्मणा सङ्कोचविकासकथनस्याऽत्यन्तमसङ्गतत्वात् । तथा दीपप्रभायामग्रप्रदेशैः समं विभज्य परावर्तनपूर्वकं मूलप्रदेशैः समं संयोगस्याऽसम्भवेन तत्र सङ्कोचविकासकथनस्याऽत्यन्तासङ्गतत्वात्, यदा हि प्रदीपप्रभा गृहं व्याप्याऽवस्थिता, तदा सहसा वस्तुना पिधाने कृते प्रसृतानां तेजोवयवानां परावर्तनपूर्वकं मूलप्रदेशैः सह संयोग आवरणसत्त्वेनाऽनुपपन्न इति मध्ये विच्छेदेन तावदवयवकतेजोविनाश एव तत्राऽभ्युपेतव्यः, न तु पिधानसमसम-

यसङ्कोच–तदुद्घाटनसमसमयविकासवत्त्वादिकमभ्युपगन्तुं युक्तम्, सार्वलौकिकप्रतीतिबाधप्रसङ्गात् । तस्मादयुक्तोऽयं दीपप्रभायाः सङ्कोचविकासवत्त्वाभ्युपगमः । सावयवत्वेनाऽत्र कथञ्चिदभ्युपगमेऽपि निरवयवे ज्ञाने तदभ्युपगमः सुतरामयुक्तो जन्मसहस्रेणाऽप्यशक्यसाधनश्चेत्यलं श्रुतिशतविततिवातवेगपराहतकुदृष्टिदृष्टयुक्तिजालतूलनिरसनेन ।

एतेन भोगसाङ्कर्यनिवारणमपि प्रत्युक्तम् । पूर्वोक्तरीत्या 'एवं चात्माकार्त्स्न्यम्–'इतिसूत्रस्वारस्यसंरक्षणाय धर्मधर्मिणोरभेदस्याऽभ्युपगन्तव्यतया ज्ञानस्य विभुत्वे आत्मनो विभुत्वात्सर्वेषां सर्वसम्बन्धवत्त्वेन भोगसाङ्कर्यस्य परमतवदप्रकम्प्यत्वात् । अत एवाऽऽत्मभेदाभ्युपगमेऽप्यात्मनां व्यापकत्वात्सर्वसम्बन्धस्याऽवर्जनीयत्वेनैकेन कृतस्याऽपि कर्मणः सर्वकृतत्वापत्त्या सङ्कीर्णत्वात्तद्व्यवस्थापकाभिसन्ध्यादीनां च सर्वात्मसन्निधावुत्पद्यमानानामेतस्यैवेदमभिसन्ध्यादिकं नाऽन्यस्येति नियन्तुमशक्यतया भोगसाङ्कर्यवारकत्वाभावादीश्वरस्य सर्वेषां चाऽऽत्मनां भोगसाङ्कर्यं दुरुद्धरमित्यात्मभेदमभ्युपगम्याऽपि सुखदुःखादिव्यवस्थाया दुरुपपादत्वे श्रुतिविरुद्धात्मभेदकल्पनस्य निष्प्रयोजनत्वेनैकात्म्यवादेऽपि कल्पितभेदेन कल्पितभोगव्यवस्थायाः सम्भवान्नाऽनुपपत्तिलेशोऽप्यस्मत्पक्ष इति भवत्कृत्यया भवानेव पराभूत इति महत् कष्टम् ! विस्तरभयाच्चोदास्महे । पराक्रान्तं चाऽत्र सूरिभिः ।

यच्च–चतुर्थविरोधपरिहारकथनं, तन्मार्जारस्य स्वचक्षुर्निमीलनेन लोकानामपि चक्षुर्निमीलनकल्पनाभिमानवत् परिहासास्पदम् । भवता तानि भाष्याक्षराणि नाऽवलोक्यन्त इति किमन्यैरपि नाऽवलोकयिष्यन्ते ? इत्थं हि तत्र भाष्यं च-

क्षुष्मतां प्रत्यक्षविषयीभूतम्-

'आगन्तुकदेहपरिग्रहे हि स्वेन रूपेणेति विशेषणमनर्थकं स्यात् । अविशेषणेऽपि तस्य स्वकीयरूपत्वासिद्धेः ।'

एवं सति तस्मिन्नधिकरणे—'न तु देहेन्द्रियादीनां सद्भावासद्भावप्रस्तावोऽपि कृतः-'इतिप्रत्यक्षापलापे भवतो ज्ञानमेवाऽपराध्यति, न पुनरायुष्मतो दोष इति सर्वं चतुरस्रम् । तदेवं मृदुलमतीनां व्यामोहं प्रशमयितुं विद्वत्परिषदि प्रयत्नमास्थितवतां भवतां स्वव्यामोहोऽनेन विरोधपरिहारस्याऽऽभासत्वप्रदर्शकप्रयत्नेन कथञ्चिद्व्यपगतो भवेदिति सम्भाव्यते ।

तदेवं श्रुतिस्मृतियुक्त्यवष्टम्भेन प्रतिपादितमप्यर्थं यद्यनवबुद्ध्यैवाऽन्यथा वा परिकल्प्य परे किञ्चिज्जल्पेयुस्तान् प्रति-

क्रूराः ! कृतोऽञ्जलिरयं बलिरेष दत्तः
कायो मया प्रहरताऽत्र यथाभिलाषम् ।
अभ्यर्थये वितथवाङ्मयपांसुवर्षै-
र्मा माऽऽविलीकुरुत कीर्तिनदीः परेषाम् ॥

इति निवेदयन् ।

'नाऽभ्यर्थ्या इह सन्तः स्वयं प्रवृत्ता न चेतरे शक्याः ।
मत्सरपित्तनिबन्धनमाचिकित्स्यमरोचकं येषाम्-'

इतीदं भामतीस्थं पद्यं पुरस्कुर्वन्—

विरमत्यनल्पजल्पनात्—

स एव-

रुद्रभट्टशर्मा ।

ॐ तत्सत् ।

श्रीविश्वेश्वरार्पणमस्तु ।

पं० विश्वेश्वरशास्त्रि प्रकाशित विरोधपत्रिका—

॥ श्रीः ॥

## श्री १०८ शङ्करभगवत्पादाचार्येभ्यो नमः ।

ईश्वरो गुरुरात्मेति मूर्तिभेदाद्विभागिने ।
व्योमवद्व्याप्तदेहाय दक्षिणामूर्तये नमः ॥
वक्त्रारमासाद्य यमेव नित्या
सरस्वती स्वार्थसमन्विताऽऽसीत् ।
निरस्तदुस्तर्ककलङ्कपङ्का
नमामि तं शङ्करमर्चितांघ्रिम् ॥

अथ खलु भगवता बादरायणाचार्येण 'विप्रतिषेधाच्चासामञ्जस्यं'—इतिसूत्रेण परस्परविरुद्धार्थप्रतिपादकत्वात्सांख्यमतस्याऽप्रामाणिकत्वं व्यवस्थापितम् ।

रामानुजेरिते भाष्ये विरोधानां परं शतम् ।
दुरुद्धरं हरेणाऽपि हरिणाऽपि निरूप्यते ॥

( १ ) शास्त्रप्राप्तस्य शास्त्रेण निषेधे समानबलत्वात् बाध्यबाधकभावासम्भवादनन्यगत्या षोडशिग्रहणाग्रहणवद्विकल्प एवाऽऽश्रयितव्यः, वस्तुनि विकल्पासम्भवाद्विरोध एवाऽऽपद्यते । तथा च साङ्ख्यमतासामञ्जस्यकथनेन रामानुजीयमतस्याऽप्यप्रामाण्यं कैमुतिकन्यायसिद्धम् । अथ च 'पत्युरसामञ्जस्यात्'इतिसूत्रेण वेदबाह्यपाशुपतागमाऽऽगतपाशुपतादिमतानामप्रामाण्यं ब्रुवता वेदविरुद्धागमादिप्रामाण्यं ब्रुवतां तदनुष्ठायिनां च मतमप्रामाणिकमित्यापादितम् । तथा च वेदविरुद्धद्राविडभाषाभाषितप्रबन्धविशेषस्य वेदतुल्यप्रामाण्यमङ्गीकुर्वतस्तदनुसारेणाऽनुतिष्ठतो रामानुजीयस्याऽपि मतमप्रामाणिकमिति मन्यामहे ।

प्रथमस्तावत्कारणत्वस्य निरपेक्षाम्नायैकसमधिगम्यत्वं श्रुतिप्रतिषेध्यत्वं चेति तदीयभाष्यभावोदाहरणाभ्यामाक्षिप्यते, तथा हि 'शास्त्रयोनित्वात्'इत्यत्र रामानुजीयं भाष्यम्—

"तदिदं कारणं ब्रह्म सिद्ध्यत्येवाऽनुमानतः ।
अतोऽविचार्या वेदान्ता ननु सिद्धानुवादिनः ॥
नैतत्साध्वनुमानादेर्न कर्त्रैक्यादि सिध्यति ।
अतस्तत्कारणं ब्रह्म वेदान्तैकप्रमाणकम् ॥

इत्थं कारणत्वस्य वेदान्तैकप्रमाणकत्वमुक्त्वा 'नात्मा श्रुतेर्नित्यत्वाच्च ताभ्यः'इत्यस्मिन्नधिकरणे तद्विरुद्धं रामानुजेनोक्तम् । तथा च रामानुजीयं भाष्यम्—'अतः सर्वदा चिदचिद्वस्तुशरीरतया तत्प्रकारं ब्रह्म, तत्कदाचित्स्वस्माद्विभक्तव्यपदेशाऽनर्हातिसूक्ष्मदशापन्नचिदचिद्वस्तुशरीरं तिष्ठति, कदाचिद्विभक्तनामरूपस्थूलचिदचिद्वस्तुशरीरं, तच्च कार्यावस्थं ब्रह्म, तत्र कारणावस्थस्य कार्यावस्थापत्तावचिदंशस्य कारणावस्थायां शब्दादिविहीनस्य भोग्यत्वाय शब्दादिमत्तया स्वरूपान्यथाभावरूपविकारो भवति, चिदंशस्य च कर्मफलविशेषभोक्तृत्वाय तदनुरूपविज्ञानविकासरूपविकारो भवति, उभयप्रकारविशिष्टनियन्त्रंशे तदवस्थतदुभयविशिष्टतारूपविकारो भवति, कारणावस्थाया अवस्थान्तरापत्तिरूपो विकारः प्रकारद्वये प्रकारिणि च समानः, अत्र चिदचिदंशयोरेव विकारित्वं, ब्रह्मणो विकारिवैशिष्ट्यमात्रम् , न विकारित्वं' इत्युक्तम् । विकारित्वे 'स वा एष महानजः'इत्यादिश्रुतिविरोधोऽपि दर्शितः । अत्रेदं विचार्यते, प्रकारिणा साकं प्रकारद्वयस्य कः सम्बन्धः ? संयोगः, समवायः ,स्वरूपं, तादात्म्यं वा ? नाऽऽद्यः, व्यापकत्वव्याघातात् । नाऽपि द्वितीयः, अनभ्युपगमात् । नाऽपि स्वरूपं, तादात्म्यं वा, विकारित्वेन सावयवतयाऽनित्यतापातात् । अत्राऽयं प्रयोगः—

त्वन्मतसिद्धः परमेश्वरोऽनित्यः, विकारास्पदत्वात्, घटवत् । न चाऽप्रयोजकता, घटादीनामपि नित्यत्वापत्तेः । न चेष्टापत्तिः, दृष्टविरुद्धार्थकल्पने प्रेक्षावत्ताविघातात्, मानाभावाच्च । न च कारणरूपेण

तेषां नित्यत्वमिति वाच्यम् । नित्यानित्यव्यवहारलोपप्रसङ्गात् । न च जडत्वेन सोपाधिकत्वम्, त्वन्मते धर्मज्ञानगतप्रकाशस्याऽनित्यत्वाभ्युपगमेन साध्यव्यापकत्वाऽसिद्धेः, ब्रह्मणो जीवभिन्नत्वाङ्गीकाराज्जीवभिन्नस्य जडत्वनियमात्, ब्रह्मणो जडप्रपञ्चाऽनन्यत्वस्वीकाराच्च त्वदीयब्रह्मणो जडत्वसिद्ध्या साधनाव्यापकत्वासिद्धेश्चेत्ययं विरोधःपरिहर्तव्यः।

( २ ) 'नात्मा श्रुतेः' इत्यधिकरणे रामानुजेन जीवस्याऽन्यथाभावः सकलश्रुतिविरोधान्न सम्भवति, किन्तु धर्मान्यथाभाव इत्युक्त्वा 'कर्ता शास्त्रार्थवत्त्वात्' इत्यधिकरणे जीवस्य कर्तृत्त्वमभ्युपगतम्, कर्तृत्वं हि कार्यानुकूलकृतिमत्त्वं, ततश्च कृत्यात्मना जीवस्य परिणामोऽभ्युपगन्तव्यः, * तदभ्युपगमे च स्वरूपान्यथाभाव उक्तो भवति, इत्थमेकत्र स्वरूपान्यथाभावप्रतिषेधादन्यत्राऽभ्युपमाच्च पूर्वापरविरोधः।

( ३ ) 'एवं चात्मा कात्स्न्यर्म्', 'न च पर्यायादप्यविरोधो विकारादिभ्यः', 'अन्त्यावस्थितेश्चोभयनित्यत्वादविशेषः' इतिसूत्रत्रये शरीरपरिमाण आत्मेति जैनमतं दूषितम् । तेन च शरीरपरिमाण आत्मेति जैनमतं स्वीकृतं, ततश्च विरोधः । ननु धर्मज्ञानशब्दितस्याऽऽत्मनो विभुत्वमेव स्वीकृतं, न तु शरीरपरिमाणत्वमिति चेन्न। कर्मणा धर्मज्ञानस्य सङ्कोचमभ्युपगम्य तत्तच्छरीरपरिमाणत्वस्य व्यवस्थापितत्वात्। तथा च रामानुजीयं भाष्यम्—'स्वयमपरिच्छिन्नमेव ज्ञानं सङ्कोचविकासार्हमुपपादयिष्यामः, अतः क्षेत्रज्ञावस्थायां कर्मणा सङ्कुचितस्वरूपं तत्तत्कर्मानुगुणतरतमभावेन वर्तते, तच्चेन्द्रियद्वारेण व्यवस्थितम्, तमिममिन्द्रियद्वारेण ज्ञानप्रसरमपेक्ष्योदयास्तमयव्यपदेशः प्रवर्तते, ज्ञानप्रसरे तु कर्तृत्वमस्त्येव, तच्च न स्वाभाविकम्, अपि तु कर्मकृतमि-

---

* अयं भावः । जीवस्य वास्तवकर्तृत्वस्वीकारे कृत्यात्मना तस्य परिणामोऽपि स्वीकृत एव, कार्यानुकूलकृतिमत्त्वरूपकर्तृत्वस्य धर्मज्ञाननिष्ठत्वे धर्मिणो जीवस्य वास्तवकर्तृत्वाऽसम्भवात्तस्य वास्तवकर्तृत्वनिर्वाहायाऽवश्यमेव कृत्यात्यना परिणामोऽभ्युपगन्तव्यः, अन्यनिष्ठकर्तृत्वस्याऽन्यस्मिन्नारोपे वेदाविन्मतप्रवेशापत्तेरिति कृतिर्धर्मज्ञानपरिणाम एव, न जीवपरिणाम इति शङ्काया नाऽत्राऽवसरः ।

त्यविक्रियस्वरूप एवाऽऽत्मा, एवंरूपविक्रियात्मकं ज्ञातृत्वं ज्ञानस्वरूपस्याऽऽत्मन एवेति, तस्माद्धर्मज्ञानस्य तत्तच्छरीरपरिमाणता दीपप्रभायास्तत्तद्गृहपरिमाणतेव सिद्धा, अन्यथा सर्वजीवसम्बन्धिनां सर्वेषां विभुत्वात्सर्वेषां जीवानां भोगसाङ्कर्यं स्यात्, न च कर्मभिर्व्यवस्था, कर्मणां निवृत्तत्वात्, अनिवृत्तत्वेऽपि तेषां व्यवस्थापकत्वं 'अदृष्टानियमात्'इत्यादिसूत्रैर्निरस्तमिति जीवानां भोगसङ्करो दुर्वारः, एवं जीवानां ईश्वरस्य च सङ्करः स्यात्, ततश्च मुक्तजीवानां लक्ष्मीभोक्तृत्वमीश्वरस्य मुक्तजीवसङ्कल्पजन्यवनिताभोक्तृत्वं च स्यात्, 'सम्भोगप्राप्तिरिति चेन्न वैशेष्यात्'इत्यत्र हि त्वया कर्मतदभावाभ्यां जीवेश्वरयोरसङ्कर उपपादितः, सम्प्रति कथं व्यवस्थोपपद्यते ? यत्तु रामानुजीयकल्पनं—अमुक्तानां कर्म व्यवस्थापकं, मुक्तानामिच्छैव व्यवस्थापिका, ततश्चाऽसङ्कर इति । तदज्ञानविजृम्भितम् । 'अदृष्टानियमात्'—इत्येकं नियामकं दूषयित्वा पुनरिच्छादीनां नियामकत्वमाशङ्क्य 'अभिसन्ध्यादिष्वपि चैवं'इत्यनेन तदपि सूत्रकृता निरस्तम् । तस्मादिच्छा नियामिकेतिकल्पनं सूत्रविरुद्धम् । एवमीश्वरस्याऽपि, ततश्च कस्यचिन्मुक्तस्य सङ्कल्पात्कस्याञ्चिद्वनितायां समुत्थितायां तत्सम्भोगे च सति तस्याः सर्वजीवसङ्कल्पोत्थितत्वात्तत्सम्भोगः सर्वेषां स्यात्, एवमीश्वरस्य लक्ष्मीसम्भोगेच्छायां तत्सम्भोगे सति सर्वेषां मुक्तजीवानां लक्ष्मीसम्भोगेच्छा, तत्सम्भोगश्च स्यात्, तस्मान्मुक्तौ धर्मज्ञानस्य विभुत्वं दुर्वचम्, ततश्च तत्तच्छरीरपरिमाणात्मकत्वं स्वाभाविकमेव, न तु कर्मकृतम्, मुक्तावप्यनुवर्तमानत्वात्, यदि च शरीरपरिमाणत्वं कर्मकृतमेवेत्यभिमानः, तथापि मुक्तौ कर्मानुवृत्तेर्दुर्वारत्वान्मुक्तावपि कर्मकृतमेवाऽस्तु, तस्मात्स्वभावतः कर्मतो वा बन्धदशायां मुक्तौ वा शरीरपरिमाणत्वं त्वदीयात्मनि सिद्धम्, तथा चाऽऽर्हतस्य भवानवतार इति शक्यं वक्तुम्,इत्थं शरीरपरिमाणत्वमभ्युपगम्य पुनरार्हताऽभिमतशरीरपरिमाणत्वदूषणाद्विरोधः सिद्धः ।

( ४ ) रामानुजेन चतुर्थाध्याये चतुर्थपादे ' सम्पद्याविर्भावः स्वेनशब्दात्–'इत्यधिकरणे मुक्तस्य देवादिरूपवत्साध्येन रूपेण सम्बन्धः स्वरूपाविर्भाव इति पूर्वपक्षं कृत्वा चिदानन्दादिलक्षणेन स्वेन रूपेणा-

ऽऽविर्भाव इति सिद्धान्तः कृतः, तथा च तदीयम्भाष्यम्,–'अयं प्रत्यगात्माऽर्चिरादिना परं ज्योतिरुपसम्पद्य यं दशाविशेषमापद्यते स स्वरूपाविर्भावः, कुतः? स्वेनशब्दात्, स्वेनरूपेण विशेषणोपादानादित्यर्थः, आगन्तुकदेहपरिग्रहे हि स्वेनरूपेणेति विशेषणमनर्थकं स्यात्, अविशेषणेऽपि तस्य स्वकीयरूपत्वसिद्धेः, इत्थं मुक्तावागन्तुकदेहपरिग्रहाभावं प्रतिज्ञाय मध्ये जैनमते सद्भावमुक्त्वा, 'द्वादशाहवत्तदुभयविधं बादरायणोऽतः–' इत्यत्र यथा द्वादशाहस्य संकल्पवशात्सत्राऽहीनोभयात्मकत्वं, तथा मुक्तावपि तद्भावाऽभावौ चोक्तौ, इत्थं च मुक्तौ देहेन्द्रियाद्यभावोक्तेरन्यत्र तत्सद्भावोक्तेश्च विरोधः।

अत्रोल्लिखिता विरोधाः वृथापाण्डित्यं परित्यज्य प्रमाणपुरस्सरैर्वचनैः परिहर्तव्याः, येन प्रेक्षावन्तो दर्शनेन सन्तुष्टा भवेयुरिति शिवम्॥

विश्वेश्वरशास्त्री द्राविडः।

---

श्रीमते रामानुजाय नमः।

# विरोध–परिहारः।

सत्यैरेव सदातनोक्तिनिवहैस्सत्यप्रमाहेतुभि-
स्सत्यं ज्ञानमनन्तमेकममलं यद्ब्रह्म निर्दिश्यते।
तत्सत्यैः परिकर्मितं गुणगणैस्सत्याभिसन्धिक्रियं-
सत्यानन्दविभूतिकं विचिनुमस्सत्यस्य सत्यम्महः॥
तस्मै रामानुजार्याय नमः परमयोगिने।
यः श्रुतिस्मृतिसूत्राणामन्तर्ज्वरमशीशमत्॥

## इदमिह विदाङ्कुर्वन्तु विद्वांसस्सज्जनाः!

श्रीमत्परमहंसपरिव्राजकाचार्य जगद्गुरु श्रीरामानुजभगवत्पादीय सनातनपरमवैदिकसत्संप्रदायाचार्येषु श्रीकाञ्ची प्रतिवादिभयङ्करसिंहासनाधीश्वरेषु, श्रीमदनन्ताचार्यस्वामिषु महता विभवेन काशीनगरी-

मागतेषु, श्रीवैष्णवसम्प्रदायस्य महान्तं वैभवातिशयं दृष्ट्वाऽसहमाना असूयालवः केचन बालिशबुद्धयो दुराग्रहग्रहगृहीतास्स्वहृदयान्तर्निगूढस्यासूयाग्नेर्विष्फुलिङ्गानिव निन्दाक्षराणि समुद्गिरन्तो महनीयान्पूर्वाचार्यानप्यधिक्षिपन्तः कृतकृत्यान्धन्यांश्च मन्यन्ते । श्रीसुब्रह्मण्यशास्त्रिणां पुत्रो विश्वेश्वरशास्त्री तेषामन्यतमः । तेन च विश्वेश्वरशास्त्रिणा किमपि पत्रं प्रकाशितमस्माभिर्दृष्टम् । तत्र च तेन श्रीभगवद्रामानुजीयभाष्ये विरोधानां शतं यद्यपि निरूप्यतयाप्रतिज्ञायते, परन्तु महता परिश्रमेण चत्वार एव प्रदर्शिताः । शास्त्रिणः खलु सिद्धान्ते ब्रह्मव्यतिरिक्तं सर्वमध्यस्तं मिथ्याभूतं च, तत एव श्रीरामानुजभाष्ये प्रदर्शनीयतयाऽनेन प्रतिज्ञातैर्विरोधैरपि नूनं तथाविधैरेव भाव्यम्, अन्यथा हि स्वसिद्धान्तविरोधस्स्यात्, अतश्च तदविरोधायासन्त एव विरोधा भ्रान्त्या परिकल्पिता अनेन प्रदर्श्यन्त इति युक्तमेवेदं सिद्धान्ताभिमानिनोस्येति मन्यामहे वयम् ।

इदं चास्माभिः प्रकाशनीयं भवति, यः खलु विरोधवरूधिनी नाम कोपि दुर्ग्रन्थ उमामहेश्वरनाम्ना केनचित्पूर्वं प्रणीतः, यस्य च खण्डनाय प्रवृत्ताः—"विरोधवरूधिनीनिरोध" "विरोधवरूधिनीप्रमाधिनी" "कुदृष्टिध्वान्तमार्तण्डा" दयो ग्रंथाः, तत्र प्रदर्शिता एव विरोधाभासाः केचन स्वपरिश्रमं परिहरतानेन शास्त्रिणात्र पत्रिकायां समुद्धृताः, अतश्च शास्त्रिणानेन प्रकाशितानां विरोधाभासानामेषां समुद्धारायास्माकं नवीनःप्रयत्नो यद्यप्यनावश्यक एव, तेष्वेवच "विरोधवरूधिनीनिरोधा"दिषु सम्यग्विरोधाभासानामेषां परीक्षणं कृतं वर्तते, अथापि स्वीयगोष्ठ्यां स्वबुद्धिबलाविष्कृतानिमान्विरोधाभासान्प्रकाशयतोस्य शास्त्रिणो योग्यतासर्वस्वं सर्वेषां पुरतः प्रकाशयितुम्मृदुल मतीनां व्यामोहं प्रशमयितुं चायमस्माकं प्रयत्नः ।

तत्रादौ—"अथ खलु भगवता बादरायणाचार्येण 'विप्रतिषेधाच्चासामञ्जस्यम्' इति सूत्रेण परस्परविरुद्धार्थप्रतिपादकत्वात्सांख्यमतस्याप्रामाणिकत्वं व्यवस्थापितम्"—इति लिखन्नयं शास्त्री नूनमात्मनो वेदान्तदर्शनज्ञानं सम्यक्प्रकटीकरोति । "विप्रति-

षेधाच्चासमञ्जसम्'' इति खलु सांख्याधिकरणसूत्रम् । अयन्तु ''विप्रतिषेधाच्चासामञ्जस्यम्'' इति सूत्रानुपूर्वी लिखति, तेनास्य वेदान्तदर्शनज्ञानमन्यादृशं व्यक्तीभवति ।

**''रामानुजेरित भाष्ये विरोधानां परं शतम् ।''** इत्यादिरयं प्रतिज्ञाश्लोको विरोधवरूथिनीस्थ एव, तमेव श्लोकमत्र समुद्धरतानेन स्वीयं कवनसामार्थ्यमपि स्फुटीकृतम् ।

**''शास्त्रप्राप्तस्य शास्त्रेण निषेधे समानबलत्वाद्बाध्यबाधकभावासम्भवादनन्यगत्या षोडशिग्रहणाग्रहणवद्विकल्प एवाश्रयितव्यः वस्तुनि विकल्पासम्भवाद्विरोध एवापद्यते, तथाच साङ्ख्यमतासामञ्जस्यकथनेन रामानुजीयमतस्याप्यप्रामाण्यं कैमुतिकन्यायसिद्धम् ।''** इति लिखन्नयं स्वसम्प्रदायाचार्यस्य सिद्धान्तमपि विस्मृतवानिति मन्यामहे । यत एतत्सम्प्रदायाचार्यश्शास्त्रस्यापि शास्त्रेण बाध्यत्वमङ्गीकरोति । आरम्भणाधिकरणे हि श्रीमच्छङ्कराचार्यपादैः-'' नन्वेकत्वैकान्ताभ्युपगमे नानात्वाभावात्प्रत्यक्षादीनि लौकिकानि प्रमाणनि व्याहन्येरन् । निर्विषयत्वात् । स्थाण्वादि-

> ष्विव पुरुषादिज्ञानानि । तथा विधिप्रतिषेधशास्त्रमपि भेदापेक्षत्वात्तदभावे व्याहन्येत, मोक्षशास्त्रस्यापि शिष्यशास्त्रादिभेदापेक्षत्वात्तदभावे व्याघातस्स्यात ''

इत्याशङ्क्य, ''अत्रोच्यते, नैषदोषः'' इत्यादिना समाधानं वदद्भिः

> '' प्राक्चात्मैकत्वावगतेरव्याहतस्सर्व – स्सत्यानृतव्यवहारो लौकिको वैदिकश्चेत्यवोचाम । तस्मादन्त्येन प्रमाणेन प्रतिपादित आत्मैकत्वेसमस्तस्य प्राचीनस्य भेदव्यवहारस्यबाधितत्वान्नानेकात्मकब्रह्मकल्पनावकाशोस्ति ''

इति ग्रन्थे लौकिकस्येव वैदिकस्यापि भेदव्यवहारस्यात्मैकत्वज्ञानपूर्वकालमात्रभावित्वम्, आत्मैकत्वप्रतिपादकेन प्रमाणेन बाधितत्वं च स्पष्टमुक्तमिति भेदापेक्षविधिप्रतिषेधशास्त्राणामात्मैकत्वप्रतिपादकशास्त्रस्य च विरोधे सत्यन्त्येनात्मैकत्वप्रतिपादकशास्त्रेण पूर्वस्य विधिनिषेधशास्त्रस्य बाध्यत्वं ह्यङ्गीकृतमवगम्यते । अपच्छेदन्यायेन भेदावल-

म्बिन: पूर्वशास्त्रस्य परेणाभेदशास्त्रेण बाध्यत्वं चैतात्सिद्धान्त्याभिमतम्। तदिदं सर्वं विस्मृत्यानेन शास्त्रिणा स्वसिद्धान्तविरुद्धमिदमुक्तं "बाध्यबाधकभावासम्भवादि" त्यादीति मन्यामहे वयम्।

यत्तु–"**अथ च, पत्युरसामञ्जस्यात्, इति सूत्रेण वेदबाह्यपाशुपतागमागपाशुपतादिमतानामप्रामाण्यं ब्रुवता वेदविरुद्धागमादिप्रामाण्यं ब्रुवतां तदनुष्ठायिनां च प्रमतमामाणिकमित्यापादितमि**" त्युक्तम्, तत् तदधिकरणार्थापरिज्ञानमूलकम्। न खलु तत्सम्प्रदायभाष्यकारव्याख्यानुसारेण तस्मिन्नधिकरणे वेदविरुद्धत्वेन कारणेन कस्याप्यागमस्य तदागमसिद्धस्य मतस्य वा ऽप्रामाण्यं साध्यते, अपितु केवलनिमित्तकारणेश्वरवादोऽसामञ्जस्येन प्रतिषिध्यते। इत्थमेव तन्मतभाष्यप्रक्रिया दृश्यते। तथाच तदधिकरणभाष्यम्–

"तस्मादप्रकृतिरधिष्ठाता केवलं निमित्तकारणमीश्वर इत्येष पक्षो वेदान्तविहितब्रह्मैकत्वप्रतिपक्षत्वाद्यत्नेनात्र प्रतिषिध्यते। पत्युरीश्वरस्य प्रधानपुरुषयोरधिष्ठातृत्वेन जगत्कारणत्वं नोपपद्यते, कस्मात्? असामञ्जस्यात्। किं पुनरसामञ्जस्यम्? हीनमध्यमोत्तमभावेन हि प्राणिभेदान्विदधत ईश्वरस्य रागद्वेषादिदोषप्रसक्तेरस्मदादिवदनीश्वरत्वं प्रसज्येत।" इत्यादि।

यद्यपि पाशुपतमतसिद्धेयं कल्पना नूनं वेदबाह्या, पाशुपतागमश्च वेदविरुद्धः। अथापि नात्राधिकरणे वेद विरुद्धत्वेन कारणेन कस्याप्यागमस्य तत्सिद्धस्य मतस्य वाऽप्रामाण्यं प्रसाध्यते। वेदविरुद्धानां स्मृत्यादीनामप्रामाण्यं हि पूर्वकाण्डे विरोधाधिकरणे समर्थितम्। तस्मात्स्वमतभाष्यकाराभिप्रायविरुद्धमेव लिखत्ययमित्युपेक्षणीयो भवत्यस्य वादः। अस्तुवा वेदविरुद्धागमादीनामप्रामाण्यं तत्सूत्रप्रतिपाद्यम् तथापि यावता ह्यागमस्य मतस्य वा वेदविरुद्धत्वं न सिध्यति, तावत्त्वदुक्तिमात्रेण न किमपि सिध्यति। नच वयं वेदविरुद्धस्य कस्याप्यागमस्य प्रामाण्यं स्वीकुर्मः।

यत्तु–"**तथाच वेदविरुद्धद्राविडभाषाभाषितप्रबन्धविशेस्य वेदतुल्यप्रामाण्यमङ्गीकुर्वतस्तदनुसारेणानुतिष्ठतो रामानुजीय-**

स्यापि मतमप्रामाणिकमिति मन्यामहे"इति,तत्तदीयाज्ञानमात्रकार्यम्। तथाहि-वेदविरुद्धद्राविडभाषाभाषितप्रबन्धविशेषस्ये' त्यत्र द्राविडभाषाभाषितत्वात्प्रबन्धविशेषस्य वेदविरुद्धत्वमभिप्रेतम्, अथवा वस्तुतो वेदविरुद्धो द्राविडभाषाभाषितश्च यः-प्रबन्धविशेषस्तस्येति विवक्षितम्? आद्ये द्राविडभाषाभाषितत्वमात्रेण कथं वेदविरुद्धत्वसिद्धिः? न खलु संस्कृतभाषाभाषितास्सर्वेपि प्रबन्धा वेदाविरुद्धा इति वा भाषान्तर भाषितास्सर्वेपि प्रबन्धा वेदविरुद्धा इति वा कोपि नियमो भवति। संस्कृतभाषाभाषितानामपि शाक्यादिग्रन्थानां वेदविरुद्धताया अन्यभाषाभाषितानामपि वेदप्रतिपाद्यार्थप्रतिपादकानां वेदाविरुद्धतायाश्चाङ्गीकारसम्भवात्। ततश्च द्राविडभाषाभाषितत्वमात्रं न कस्यापि प्रबन्धविशेषस्याप्रामाण्ये हेतुर्भवति। ये पुनर्द्राविडभाषाप्रबन्धा अस्मत्सम्प्रदायिनां प्रमाणभूतास्ते वेदाविरुद्धा इत्येव वयं मन्यामहे। द्वितीयस्तु पक्षस्सुतरामयुक्तः, वस्तुतो वेदविरुद्धस्य संस्कृतभाषामयस्य वा द्राविडभाषामयस्य वा प्रबन्धविशेषस्यास्मत्सम्प्रदायिभिः प्रमाणतानङ्गीकारात्।

एतावता चास्माभिर्लेखकमहाशयस्य सामर्थ्यविशेषपरीक्षणमेव कृतम्, इतः परमेव तेन श्रीरामानुजभाष्ये समुद्भाविता विरोधाः परीक्षिष्यन्ते।

तत्र तावद्भगवता भाष्यकृता श्रीरामानुजाचार्यपादेन शास्त्रयोनित्वाधिकरणे ब्रह्मणो जगत्कारणत्वं निरपेक्षाम्नायैकसमधिगम्यमित्युक्त्वा, "नात्माश्रुतेर्नित्यत्वाच्च ताभ्यः" इत्यस्मिन्नधिकरणे तद्विरुद्धं भाषितमिति प्रथमं विरोधमयं दर्शयति। प्रथमं विरोधमुपपादयतानेन **"तथाहि 'शास्त्रयोनित्वादि' त्यत्र रामानुजीयं भाष्यम्"** इत्युक्त्वा, यौ द्वौ श्लोकौ तदधिकरणार्थप्रतिपादकौ रामानुजभाष्यगतत्वेनोदाहृतौ, तौ श्रीरामानुजभाष्ये नोपलभ्येते, तेनास्य श्रीरामानुजभाष्यादर्शित्वं स्पष्टमेव ज्ञायते। यदपि **"इत्थं कारणत्वस्य वेदान्तैकप्रमाणकत्वमुक्त्वा"** इति शास्त्रयोनित्वाधिकरणार्थकथनम्, तदपि श्रीभाष्यपङ्क्त्यनवलोकनमूलकमेव। न खलु शास्त्रयोनित्वाधिकरणे जगत्कारणत्वं शास्त्रप्रमाणकं नवेति विचार्यते. अपितु जगत्कारणीभूतस्य ब्रह्मणश्शास्त्रैकप्रमाणकत्वम्। शास्त्रयोनित्वाधिकरणावतरणिकायामित्थं

हि भगवता भाष्यकृताऽभाषि– " जगज्जन्मादिकारणं ब्रह्मवेदान्तवेद्य-
मित्युक्तम्। तदयुक्तम्, तद्धि न वाक्यप्रतिपाद्यम्, अनुमानेन सिद्धे-
रित्याशङ्क्याह। " इति। तदधिकरणान्ते च–" अतः प्रमाणान्त-
रागोचरत्वेन शास्त्रैकविषयत्वात् 'यतो वा इमानि भूतानि' इति
वाक्यमुक्तलक्षणं ब्रह्म प्रतिपादयतीति सिद्धम्। "-इति।

**यच्च–शास्त्रयोनित्वाधिकरणे ब्रह्मणो जगत्कारणत्वस्य वेदान्तैकप्रमाणकत्वमुक्त्वा, ' नात्माश्रुतेर्नित्यत्वाच्च ताभ्य ' इत्यस्मिन्नधिकरणे तद्विरुद्धं रामानुजेनोक्तम्** " इत्युक्त्वा, आत्माधिकरणश्रीभाष्यस्य तत्प्रमाणतयोदाहरणम्, तत् लेखकस्य श्रीभाष्यपङ्क्तितदर्थाद्यज्ञानमूलकमेव, आत्माधिकरणे शास्त्रयोनित्वाधिकरणोक्तार्थविरुद्धस्य कस्याप्यर्थस्याभाषणात्। प्रत्युत जगत्कारणत्वोपपादनस्यैव तत्र क्रियमाणतादर्शनात्। इत्थं ह्यात्माधिकरणभाष्यम्—

" अतस्सर्वदा चिदचिद्वस्तुशरीरतया तत्प्रकारं ब्रह्म। तत्कदाचित्स्वस्माद्विभक्तव्यपदेशानर्हातिसूक्ष्म दशापन्न चिदचिद्वस्तु शरीरं तिष्ठति, तत्कारणावस्थं ब्रह्म। कदाचिच्च विभक्तनामरूपस्थूलचिदचिद्वस्तुशरीरम्, तच्च कार्यावस्थम्। " इति।

अत्र च ब्रह्मणस्स्वस्माद्विभक्तव्यपदेशानर्हातिसूक्ष्मदशापन्नचिदचिद्वस्तुशरीरकस्य जगत्कारणत्वं, विभक्त नामरूपस्थूलचिदचिद्वस्तुशरीरकस्य तस्यैव कार्यभूतजगद्रूपत्वं च स्पष्टमभिधीयते। कार्यकारणावस्थयोः को विशेषः ; कथंच विकारशून्यस्य ब्रह्मणः कारणत्वकार्यत्वे? इति शङ्कां परिहरन्नाह"तत्र कारणवस्थस्य कार्यावस्थापत्तावचिदंशस्य कारणावस्थायां शब्दादिविहीनस्य भोग्यत्वाय शब्दादिमत्तया स्वरूपान्यथाभावरूपविकारो भवति, चिदंशस्य कर्मफलविशेषभोक्तृत्वाय तदनुरूपज्ञानविकासरूपविकारो भवति, उभयप्रकारविशिष्टे नियन्त्रंशे तदवस्थतदुभयविशिष्टतारूपविकारो भवति, कारणावस्थाया अवस्थान्तरापत्तिरूपो विकारः प्रकारद्वये प्रकारिणि च समानः–" इति।

अत्र हि विभक्तनामरूपस्थूलचिदचिद्विशिष्टब्रह्मरूपे कार्ये प्रकारद्वयप्रकार्येतत्त्रितयसमुदायरूपे प्रत्येकं कारणावस्थापेक्षयाऽवस्थान्तरा-

पत्तिरूपं विकारमुपपादयता भाष्यकारेण कारणत्वनिर्वाहौपयिकविकारसद्भाव एव प्रतिपादितः, नतु प्रकारयोरेव विकारः प्रकारिणि तु नास्तीत्युक्तम्। "उभयप्रकारविशिष्टे नियन्त्रंशे तदवस्थतदुभयविशिष्टतारूपविकारो भवती" ति प्रकार्यंशेपि खलु विकारसद्भाव उक्तः। इदमत्र तत्वम् प्रकारभूतेऽचिदंशे यस्स्वरूपान्यथात्वरूपो विकारः, यश्च चिदंशे धर्मान्यथाभावरूपो विकारः, तदुभयविलक्षणः स्थूलदशापन्नतदुभयविशिष्टतारूपो विकारो ब्रह्मणि प्रकारिणि भवति, विकाराणामेषां भिन्नरूपत्वेपि विकारत्वमविशिष्टम्। कारणत्वनिर्वाहकं चविकारवैशिष्ट्यमात्रम्, नतु विकारेणैवंरूपेणैव भाव्यमिति निर्बन्धोपीति।

एतेन—"अत्र चिदचिदंशयोरेव विकारित्वम्, ब्रह्मणस्तु विकारिवैशिष्ट्यमात्रं न विकारित्वमित्युक्तम्" इत्यपास्तम्, "उभयप्रकारविशिष्टे नियन्त्रंशे तदवस्थतदुभयविशिष्टतारूपविकारो भवती" ति "कारणावस्थाया अवस्थान्तरापत्तिरूपो विकारः प्रकारद्वये प्रकारिणि च समानः" इति च स्पष्टमेव भाष्यकृता ब्रह्मण्यपि विकारसद्भावप्रतिपादनात्।

यदपि "विकारित्वे 'स वा एष महानज' इत्यादिश्रुतिविरोधोपि दर्शितः" इत्युक्तम्, तदपि भाष्यार्थापरिज्ञानकार्यम्, सामान्यतो विकारित्वमात्रे 'स वा एष महानज' इत्यादिश्रुतिविरोधस्य भाष्याकृताऽप्रदर्शनात्। इत्थंहि तत्र भाष्यम्—

"स्वरूपान्यथात्व ज्ञानसङ्कोचविकासरूपोभयविधानिष्टविकाराभावाभिप्रायाः 'स वा एष महानज आत्माऽजरो मरोमृतो ब्रह्म' 'नित्यो नित्यानाम्' इत्याद्याः परविषयाः श्रुतयः।" इति।

अत्र चाचिदंशे यस्स्वरूपान्यथाभावः, यश्च चिदंशे ज्ञानसङ्कोचविकासरूपो विकारः, तयोर्ब्रह्मणि प्रकारिण्यभावमात्रं तादृशश्रुत्यभिप्रेतम्, तावेव च विकारावनिष्टावहौ, तौ च ब्रह्मणि न स्तः। स्थूलावस्थापन्नोभयप्रकारविशिष्टत्वरूपो विकारस्तु कारणत्वनिर्वाहको ब्रह्मणि वर्तमानोपि नानिष्टाय भवति—इत्येव भाष्यकृतामभिप्रायः। इत्थं च सति भाष्यकृता ब्रह्मणि विकारित्वमेव नास्तीत्युक्तमिति प्रत्यक्षापलापोयमाग्रहकृत इत्येव सिद्धं भवति।

यदपि—" अत्र विचार्यते, प्रकारिणा साकं प्रकारद्वयस्य कस्सम्बन्धः ? संयोगः समवायः स्वरूपम्, तादात्म्यं वा ? नाद्यः, व्यापकत्वव्याघातात् । नापि द्वितीयः अनभ्युपगमात् । नापि स्वरूपं तादात्म्यं वा, विकारित्वेन सावयवतयाऽनित्यतापातात् । " इत्युक्तम् । तदप्यज्ञानकार्यम्, प्रकारिणः प्रकारयोश्चापृथक्सिद्धिलक्षणसंयोगविशेषस्यैव सम्बन्धतास्वीकारात् ।

यत्तु—संयोगस्य सम्बन्धत्वे व्यापकत्वव्याघात इत्युक्तम्, तन्मन्दम्, संयोगस्य व्यापकताभञ्जकत्वाभावात् । नैयायिकादिभिर्विभूनामात्माकाशादीनां सर्वमूर्तद्रव्यसंयुक्तताया एव विभुत्वरूपताङ्गीकारदर्शनात् । विभुत्वं च व्यापकत्वापरपर्यायमेव । " अन्तर्बहिश्च तत्सर्वं व्याप्य नारायणः स्थितः । ' इति श्रुतौ निरवच्छिन्नसंयोगसम्बन्धावच्छिन्नस्वभिन्न द्रव्यत्व समानाधिकरण भेदप्रतियोगितानवच्छेदकत्वेमव च व्यापकत्वं विवक्षितम् । तस्य च न संयोगो विरोधी ।

एतेन विकल्पान्तराण्यपि समाहितानि, समवायस्य स्वरुपस्य तादात्म्यस्य वाऽ स्माभिः प्रकारप्रकारिणोस्सम्बन्धत्वास्वीकारात् ।

यत्तु—" त्वन्मतसिद्धः परमेश्वरोऽ नित्यः विकारास्पदत्वात् घटवदित्यनुमानेन परमेश्वरस्यानित्यत्वसाधनम्, तदतितुच्छम्, साक्षात्सम्बन्धेन परिणामरूपविकारस्यैवोपोधित्वात् । मृदादिष्वनित्यतया प्रतिपन्नेषुसाक्षात्सम्बन्धेन परिणामरूपविकारवत्त्वं दृष्टमिति साध्यव्यापकता, परमेश्वरे च पक्षे विभक्तनामरूपस्थूलदशापन्न चिदचिद्वैशिष्ट्यरुप विकारस्य सत्त्वेपि स्वरूपान्यथाभावरूपपरिणामशब्दितविकारस्य वा धर्मान्यथाभावरूपज्ञानसङ्कोचविकासरूपविकारस्य वा साक्षात्सम्बन्धेनानङ्गीकारेण पक्षान्तर्भावेन साधनाव्यापकत्वाच्च । एतादृशविकारस्य साक्षात्सम्बन्धेनाभावतात्पर्येणैव " स वा एष महानज " इत्यादिश्रुतीनां प्रवृत्तेः ।

यदपि—" न च जडत्वेन सोपाधिकत्वम्, त्वन्मते धर्मज्ञानगतप्रकाशस्यानित्यत्वाभ्युपगमेन साध्यव्यापकत्वासिद्धेः " इति, तदपि न, धर्मभूतज्ञानस्य सङ्कोचविकासाङ्गीकारेपि, प्रकाशाख्यस्या-

तिरिक्तस्य कस्य चिद्धर्मस्यास्माभिरनङ्गीकारात् । ज्ञानस्य स्फुरणमेव प्रकाशः । तच्चव्यवहारानुगुण्यमात्रम्, नातिरिक्तः कश्चन पदार्थः । सङ्कोचविकाससद्भावमात्रेण न कस्यचित्पदार्थस्यानित्यत्वम्, दीपप्रभायाः कुड्यादितिरोधानेन सङ्कोचस्य तदभावे विकासस्य च स्वीकारेपि तत्र प्रभाया विनष्टत्वासम्प्रतिपत्तेः । तेन ज्ञानप्रकाशस्यातिरिक्तधर्मत्वाङ्गीकारेपि वा तस्य सङ्कोचविकासाङ्गीकारेपि वा न साध्यव्यापकत्वासिद्धिः ।

यत्तु–"**ब्रह्मणो जीवभिन्नत्वाङ्गीकारात् जीवभिन्नस्य जडत्वनियमात् ।**" इति, तदतितुच्छम्, अस्मन्मते जीवभिन्नस्य धर्मभूतज्ञानस्याजडत्वेन जीवाभिन्नस्य जडत्वमिति नियमासम्भवात् । त्वन्मते जीवस्यैव सत्यस्याभावेन प्रतियोग्यप्रसिद्ध्याऽभावाप्रसिद्धेर्जीवभिन्नत्वस्याप्रसिद्धेः । व्यावहारिकस्य जीवस्य प्रसिद्धावपि तद्भिन्नत्वस्य ब्रह्मण्यङ्गीरावश्यकतया ब्रह्मण्येव व्यभिचारात् । न खलु मिथ्याभूताज्जीवात्पारमार्थिकस्य ब्रह्मणो भेदो नास्ति, अभावे सत्यमिथ्यार्थयोरैक्यप्रसङ्गेन ब्रह्मणो मिथ्यात्वस्य वा जीवे सत्यत्वस्य वा प्रसङ्गात् ।

यदपि–**ब्रह्मणो जडप्रपञ्चानन्यत्वस्वीकाराच्च त्वदीयब्रह्मणो जडत्वसिध्या साधनाव्यापकत्वासिद्धश्चे**' ति । तदपिन, स्थूलचिदचिद्विशिष्ट ब्रह्मरूपकार्यभूतजगदभिन्नत्वस्य सूक्ष्मचिदचिद्विशिष्टब्रह्मरूपकारणव स्तुन्यस्माभिरङ्गीकारेपि विशेषणीभूतजड़जीवाभिन्नत्वस्य विशेष्ये ब्रह्मण्यस्वीकारात् । स्थूलचिदचिद्विशिष्टब्रह्मण एव जगच्छब्दार्थत्वेन तत्राचिदंशस्य जडस्य प्रवेशेपि प्रपञ्चस्य केवल जडरूपत्वाभावाच्च ।

यत्तु—द्वितीयं विरोधं दर्शयतोक्तम्—"**नात्मा श्रुतेरि'त्यधिकरणे रामानुजेन जीवस्यान्यथाभाव स्सकल श्रुतिविरोधान्न सम्भवति, किन्तुधर्मान्यथाभाव इत्युक्त्वा, 'कर्ताशास्त्रार्थवत्वादि'त्यधिकरणे जीवस्य कर्तृत्वमभ्युपगतम्, कर्तृत्वं हि कार्यानुकूलकृतिमत्त्वम् । ततश्च कृत्यात्मना जीवस्य परिणामो भ्युपगन्तव्यः । तदभ्युपमे च स्वरूपान्यथाभाव उक्तो भवति । इत्थमेकत्रस्वरूपान्यथाभावप्रतिषेधादन्यत्राभ्युपगमाच्च पूर्वापर विरोधः**"

इति, तत्कर्तृत्वस्वरूपाज्ञानमूलकम्। जीवस्य स्वरूपान्यथाभावो नास्तीति त्वस्मत्सिद्धान्तः। कर्तृत्वाङ्गीकारमात्रेण च नास्य सिद्धान्तस्य कोपि विरोधः। कर्तृत्वस्य कृत्याश्रयत्वमात्ररूपत्वात्। त्वयैव च कर्तृत्वं हि कार्यानुकूलकृतिमत्त्वमित्युक्तम्। नहि कुलालादयो घटादिकर्तारो घटानुकूलकृतिमन्तोपि कृत्यात्मना परिणमन्तो दृष्टाः। नैयायिकादिभिरपि कार्यानुकूलकृतिमत्त्वरूपं कर्तृत्वमात्मनामभ्युपगतमेव। कृतेर्धर्मत्वेन तदाश्रयत्वस्यात्मन्यङ्गीकारमात्रेण कर्तृत्वसिद्धौ कृत्यात्मना परिणामाङ्गीकारस्यानावश्यकत्वात्। कर्ता—इति ह्ययं शब्दस्तृजन्तकृञ्धातुनिष्पन्नः। तत्र कृञ्धातोः कृत्यर्थकत्वात्, तृच्प्रत्ययस्याश्रयार्थकत्वाच्च कर्तृशब्देन कृत्याश्रयो बोध्यते। भावार्थकत्वप्रत्ययान्तेन कर्तृत्वशब्देन च कृत्याश्रयत्वं लभ्यते। त्वयापि च कार्यानुकूलकृतिमत्त्वं कर्तृत्वमिति कथयता स्वीकृतमेतत्। ततश्चात्मनि कर्तृत्वस्वीकारे कृतिरूपधर्माश्रयत्वसिद्धावपि कृत्यात्मना परिणामस्य प्रसङ्ग एव न दृश्यते। तस्मात्त्वदुक्तिः केवलकोलाहलमात्ररूपा न कस्मैचित्फलाय भवति। एतेन " **अयं भाव** " इत्यारभ्य कृतं त्वदीयं विवरणं सर्वमपि दूरापास्तं वेदितव्यम्।

यदुक्तमनेन तृतीयं विरोधं प्रदर्शयता—"**एवं चात्माकार्त्स्न्यम्** " '**नच पर्यायादप्यविरोधो विकारादिभ्यः**' '**अन्त्यावस्थितेश्चोभयनित्यत्वाद विशेषः**' **इति सूत्रत्रये शरीर परिमाण आत्मेति जैनमतं दूषितम्। तेन च शरीर परिमाण आत्मेति जैनमतं स्वीकृतं। ततश्च विरोधः** " इति। तदतिमन्दम्, भगवता भाष्यकृता कुत्राप्यात्मनः शरीरपरिमाणत्वस्वीकारादर्शनात्, अणुपरिमाणताया एव च तैर्व्यवस्थापितत्वात्। ज्ञाधिकरण भाष्ये हि " स्वशब्दोन्मानाभ्यां च ", इति सूत्रव्याख्याने—

" साक्षादणुशब्द एव श्रूयते—' एषोणुरात्मा चेतसा वेदितव्यो यस्मिन्प्राणः पञ्चधा संविवेशे ' ति उद्धृत्यमानम्—उन्मानम्, अणुसदृशं वस्तूद्धृत्य तन्मानत्वं जीवस्य श्रूयते—' बालाग्रशतभागस्य शतधा।

कल्पितस्य च। भागो जीवस्स विज्ञेय " इति, 'आराग्रमात्रो ह्यवरोपि दृष्ट' इति च। अतोणुरेवायमात्मा। " इत्यनुगृहीतं भाष्यकारैः।

यत्तु–" **ननु धर्मज्ञानशब्दितस्यात्मनो विभुत्वमेव स्वीकृतम्, नतु शरीरपरिमाणत्वमिति चेन्न** "इतिशङ्कनम्। तदतितुच्छम्, आत्मनो धर्मज्ञानशब्दितत्वाभावात्। आत्मा हि धर्मी, सच यद्यपि ज्ञानरूपः, अथापि तस्य धर्मज्ञानशब्दितत्वं नास्मत्सिद्धान्ते, धर्मभूतज्ञानं ह्यात्मनो धर्मिणो धर्मतयाऽस्माभिस्स्वीकृतम्, तस्यैव च विभुत्वमपि, नतु धर्मिण आत्मनोपि। तस्मादिदं धर्मधर्मिभावाज्ञानकृतं व्यर्थोक्तिमात्रम्।

यदपि–" **कर्मणा धर्मज्ञानस्य सङ्कोचमभ्युपगम्य तत्तच्छरीरपरिमाणत्वस्य व्यवस्थापितत्वादिति।** " तदपि मन्दम्, धर्मभूतज्ञानस्य कर्मवशाच्छरीरोपाधिकृतसङ्कोचाङ्गीकारेपि शरीर परिमाणत्वानङ्गीकारात्। न खलु शरीरान्तस्सङ्कोचमात्रं शरीरपरिमाणत्वरूपम्, परिमाणस्य स्वाभाविकवस्तुधर्मत्वात्, सङ्कोचस्य कादाचित्कस्यौपाधिकस्य च परिमाणरूपत्वा सम्भवात्। नच त्वदुदाहृतभाष्ये धर्मभूतज्ञानस्य शरीरपरिमाणत्वस्वीकारसूचकःकोपि शब्दोस्ति। तस्य सङ्कोचविकासाङ्गीकारमात्रं दृश्यते।

यदपि–"**तस्माद्धर्मज्ञानस्य तत्तच्छरीरपरिमाणता दीपप्रभायास्तत्तद्गृहपरिमाणतैव सिद्धे**"ति। तदपि तुच्छम्, दीपप्रभाया अपि गृहकुड्याद्युपरोधेन सङ्कोचसद्भावेपि तत्सङ्कोचावस्थायाः परिमाणरूपत्वाभावात्। अस्वाभाविकत्वादेव च तस्यास्सङ्कोचवस्थायाः परिमाणरूपत्वासम्भवः। दशहस्तदीर्घस्य कस्य चित्पटस्य सङ्कोचितस्यापि न न्यूनपरिमाणत्वव्यवहारो भवति। तस्माद्दीपप्रभादृष्टान्तेनापि न तव स्वाभिलषितार्थसिद्धिः।

यदपि–" **अन्यथा सर्वजीवसम्बन्धिनां सर्वेषां विभुत्वात्सर्वेषां जीवानां भोगसाङ्कर्यं स्यादिति।** " तदपि मन्दम्, सुखदुखयोर्भोगस्यात्मवर्तितयाऽऽत्मनां च शरीरभेदेन भिन्नतया धर्मभूतज्ञानानां विभुत्वमात्रेण तत्तदात्मनिष्ठसुखदुःखानुभवरूपभोगस्य साङ्कर्यप्रसङ्गाभावात्। भोगसाङ्कर्यं हि तदा प्रसज्येत यदि सर्वेषु शरीरेष्वेक आत्माङ्गीक्रियेत। नच तथास्माभिरंगीक्रियते, अंगीक्रियते च युष्माभिरेव। अतश्च प्रसङ्गोयं नास्मत्पक्षे भवति। आत्मनामणुपरिमाणानां

शरीरभेदेन भिन्नतयाऽन्यात्मनिष्ठभोगस्यान्यात्मन्यप्रसङ्गात्। एतेन जीवेश्वरसाङ्कर्यापादनमपि निरस्तम्। निरस्ताश्चान्येपि जुगुप्सावहास्त्वदीयाः प्रसङ्गाः, धर्मभूत ज्ञानानां विभुत्वेपि साङ्कर्यप्रसङ्गाभावात्।

यदपि—" **सम्भोगप्राप्तिरितिचेन्न वैशेष्यात्** " इत्यत्र हि **त्वया कर्मतदभावाभ्यां जीवेश्वरयोरसङ्कर उपपादितः, सम्प्रति कथं व्यवस्थोपपद्यत** " इति। तदपि मन्दं वचः। जीवस्येव परस्य ब्रह्मणोपि शरीरान्तर्वर्तित्वाभ्युपगमे जीववच्छरीरसम्बन्धप्रयुक्तसुखदुःखोपभोगप्राप्तिरित्याशङ्क्य, नशरीरान्तर्वर्तित्वमात्रं सम्भोगहेतुः, अपितु पुण्यपापरूपकर्मपरवशत्वम्। तच्च ब्रह्मणो नास्ति, तस्मान्न सम्भोगप्राप्तिरिति हि व्यवस्था कृता तस्मिन् सूत्रे। तस्याश्च व्यवस्थाया न कोपि भङ्ग इदानीं भवति, धर्मभूतज्ञानविभुत्वमात्रेण तद्व्यवस्थाभङ्गाभावात्। अन्ये च प्रसङ्गास्तव निरस्तप्राया इति विस्तरभयान्न पृथक् निरस्यन्ते।

यत्तु—चतुर्थं विरोधं प्रतिपादयता " **सम्पद्याविर्भावस्स्वेन शब्दादिति सूत्रभाष्ये मुक्तावागन्तुकदेहपरिग्रहाभावं प्रतिज्ञाय, द्वादशाहवदुभयविधं बादरायणोतः' इत्यत्र मुक्तौ देहन्द्रियादिकं स्वीकृतमिति विरोध** " इत्युक्तम्। तन्न, सम्पद्याविर्भावाधिकरणे मुक्तानां शरीराभावस्य भाष्यकारैरप्रतिज्ञानात्। तस्मिन् खल्वधिकरणे मुक्तानां स्वाभाविकस्वरूपाविर्भावो वा, आगन्तुकरूपसम्बन्धो वा भवतीति विचार्य, स्वाभाविकस्वरूपाविर्भावो भवती त्येतावन्मात्रमेव व्यवस्थापितम्। नतु देहेन्द्रियादीनां सद्भावासद्भावप्रस्तावोपि वा तत्र कृतः। अभावाधिकरणे तु सङ्कल्पानुसारेण मुक्तानां सशरीरत्वमशरीरत्वं च सम्भवतीत्युक्तम्। आत्मनामपरिच्छिन्नज्ञानानन्दस्वरूपं स्वाभाविकमेवाविर्भवतीति सम्पद्याविर्भावाधिकरणसिद्धान्तः, तत्र शरीरसम्बन्धसदसद्भावविचार एव नास्ति। अभावाधिकरणे च सङ्कल्पानुगुणं सशरीरत्वमशरीरत्वं च सम्भवतीत्युक्तम्। अतस्तत्र विरोधप्रसङ्ग एव नोपलभ्यते॥ इति— **देशिकवरदाचार्यः।**

गणपति कृष्ण गुर्जरद्वारा श्रीलक्ष्मीनारायणयन्त्रालये मुद्रितम्। बनारस सिटी।

